सूच्यते बाधकस्तर्कः प्रसिद्धिर्याऽत्र लौकिकी ॥२०९॥
यदि स्थानान्तरं प्राप्तमनिषिद्धं स्वप्नजा क्रिया ॥
शास्त्रारम्भस्तदा व्यर्थः स्वप्ने को नापराध्यति ॥२१०॥
लोकप्रसिद्धिर्विस्पष्टा जाग्रत्यननुवर्त्तने ॥
स्वप्नलब्धगजादीनामनन्वागतता ततः ॥ २११ ॥
यद्वाऽनन्वागतत्वं तु विवेकः कर्मणः कृतः ॥
असक्तत्वेन कामस्य कामो न ह्यात्मनो गुणः ॥२१२॥
आत्मनश्चेदयं कामो गुणश्चेनन्यवत्सदा ॥
दृश्यत्वं तस्य नैव स्यात्तस्माद् दृश्यधियो गुणः॥२१३॥
पुष्पगन्धः पुटस्थोऽपि पुष्पस्यैव यथा तथा ॥
आत्मनिष्ठतया वादिवर्णितोऽपि धियो गुणः ॥२१४॥
कर्मकामविवेकोऽयमुक्तो युक्त्याऽभ्युपेत्य तम् ॥

यद्वा संप्रसाद इत्यादिना ॥ २०८ ॥ २०९ ॥ हिशब्दसूचितं बाधकतर्कं विवृणोति यदीति ॥ शास्त्रवैयर्थ्ये हेतुः स्वप्न इति। स्वप्नदशायां पापस्य दुष्परिहरत्वात्तेनापि संक्लेषे बुद्धिशुद्धिरेव नोत्पद्यतेति शास्त्राधिकारी न सिध्यतीति भावः ॥२१०॥ प्रसिद्धिर्याऽत्र लौकिकीत्युक्तं विशदयति लोकेति ॥२११॥ अनन्वागतवाक्यस्यासक्तवाक्यस्य च स्वाभिमतार्थमुक्त्वा यत्तु मतं पक्षा-धर्मत्वाद्येतेन दर्शयति यद्वेति ॥ अनन्वागतवाक्यस्य कर्मविवेकार्थत्वेऽप्यसक्तवाक्यस्य कामाविवेकार्थत्वमयुक्तं, कामस्यात्मधर्मत्वादिति नेत्याह काम इति ॥ २१२ ॥ तस्यात्मधर्मत्वे बाधकं वदन् बुद्धिधर्मत्वमाह आत्मन इति ॥ २१३ ॥ एवं कामादेरनात्मधर्मत्वे सिद्धे आत्मनिष्ठतया मानादेव तस्यात्मधर्मत्वमिति वैशेषिकाद्युक्तमयुक्तमिति सदृष्टान्तमाह पुष्पेति ॥ २१४ ॥ क-

दत्त्वा तु दक्षिणां भूयः पप्रच्छ श्रुत्यपेक्षया ॥ २१५ ॥
स ईयते यत्र कामं यथाकामं प्रवर्त्तते ॥
इति श्रुतिद्वयं स्वप्ने विस्पष्टं काममब्रवीत् ॥ २१६ ॥
सति कामे कर्मसत्त्वमनिवार्यं ततो भयात् ॥
विमोक्षायैव मे ब्रूहि मा शङ्कामवशोषय ॥ २१७ ॥
स्वप्नकामस्य वस्तुत्वं श्रुतिभ्यां चेद्विवक्षितम् ॥
प्रबोधेऽप्यनुवर्त्तेत तच्च नास्ति ततो मृषा ॥ २१८ ॥
उतेव स्यान्महाराज उतेव स्त्रीभिरुच्यते ॥
श्रुतिवाक्यं इवेत्युक्त्या स्वप्नमिथ्यात्वमाहतुः ॥ २१९ ॥
जाग्रत्प्रत्यक्षमाश्रित्य जागरे मृत्युसत्यताम् ॥

---

उक्तमर्थमुपसंहरन्योऽहमित्यादेरर्थमाह *दत्त्वेति । *श्रुत्यपेक्षयेति ॥ आत्मनः कामकर्मव्यतिरिक्तत्वे श्रुतिविरोधशङ्काऽपरिहार्येति तदिच्छया पुनः पृच्छतीत्यर्थः ॥ २१५ ॥ उक्तमेवार्थं स्पष्टयति *स इति द्वाभ्याम् ॥ चतुर्थोक्तं स्वे शरीरे यथाकामं परिवर्तत इति वाक्यमेवार्थतः पठति *प्रवर्त्तत इति ॥ द्वयात्कामात्कर्मणश्चेत्यर्थः ॥ २१६ ॥ ॥ २१७ ॥ प्रश्नतात्पर्यमुक्त्वा स वा इत्यादिश्रुत्युक्तनिर्वचनतात्पर्यमाह* स्वप्नकामस्येति ॥ कामस्य सत्यत्वे तद्दृष्टान्तेन काम्यमानस्त्र्यादेरपि सत्यत्वप्रसङ्गः । तथा च जागरणे तस्यानुवृत्तिः स्यात्, न चानुवर्त्तते, तस्मात्स्वप्ने काम्यमानस्त्र्यादिवत्कामोऽपि मिथ्येति न तस्य सत्यत्वमुक्तश्रुतिभ्यां विवक्षितमित्यर्थः ॥ २१८ ॥ स्वप्नस्य मिथ्यात्वे हेत्वन्तरमाह *उतेति । कामस्य मिथ्यात्वे सिद्धे न तस्यात्मधर्मत्वमित्यात्मनस्तदसङ्गत्वं सिद्धमिति भावः ॥ २१९ ॥ स वा एष एतस्मिन्स्वप्ने रत्वेत्यादेस्तात्पर्यमुक्त्वा इत ऊर्ध्वमित्यादि पुनः प्रश्नस्य तात्पर्यमाह* जाग्रदिति ॥

नापि कूलद्वये सन्नेवमात्मनि योज्यताम् ॥ २२४ ॥
न कर्मवश आत्माऽयं कर्माध्यक्षत्वशासनात् ॥
आत्मा न तत्फलेनापि सज्यते स्वप्नजाग्रतोः ॥ २२५ ॥
इत्थं स्वप्नप्रसङ्गेन देहादिव्यतिरिक्तता ॥
स्वप्नमत्स्यसङ्गत्वं येरेयेनेऽर्थाः प्रपञ्चिताः ॥ २२६ ॥
केचिदत्र महामत्स्यदृष्टान्तेन निवर्तिता ॥
लोकायतस्य शाखेति प्राहुः, स्पष्टा तु वर्ण्यते ॥२२७॥
चैतन्यं भौतिकं भूतव्यतिरेकानिरूपणात् ॥
कामकर्मविवेकोऽतः कस्येत्याशु वर्ण्यते ॥ २२८ ॥
क्रमेण सञ्चरन्कूले मत्स्यस्ताभ्यां पृथग्यथा ॥
स्वप्नबुद्धान्तभूम्यांश्च तथाऽऽत्मा सञ्चरन्क्रमात् ॥२२९॥
चिदात्मा भौतिकः स्याचेन्न भूतानामविशेषतः ॥

२२४॥ आत्मनि योज्यतामित्युक्तं योजनाप्रकारमेवाह॥ नेति ॥२२५॥ स वा अयम् इत्यारभ्य मत्स्यवाक्यपर्यन्तसंदर्भेण दर्शितमर्थं बुद्धिमौकर्याय संगृह्णाति ॥इत्थमिति॥२२६॥ मत्स्यवाक्यस्य मतान्तरपक्षोक्तमर्थमाह॥ केचिदित्यादिना। चैतन्यस्य भूतचतुष्टयात्मकदेहधर्मत्वेन भौतिकस्य देहातिरिक्तचिदात्मनि मानाभावादस्यासङ्गत्वादिनिरूपणमनुपपन्नमिति चार्वाकपराकरणाय मत्स्यवाक्येन निरूप्यत इत्यर्थः ॥२२७॥२२८॥ वाक्यार्थमाह॥ क्रमेणेति ॥ यथा कूलाभ्यां भिन्नो मत्स्यस्तथाऽऽत्माऽवस्थाद्वयात्पृथग्भूतः, तथा चेन्द्रियैर्थोपलब्धिलक्षणजागरणाद् तद्वासनाजन्यज्ञानलक्षणात्स्वप्नाच्च भेदे आत्मनो भौतिकज्ञानभिन्नत्वं सिध्यतीत्यर्थः ॥ २२९ ॥ आत्मज्योतिषो भौतिकत्वे बाधकमाह॥ चिदात्मेति ॥ भौतिकज्योतिरात्मकभूतभावानामवस्थाद्वयेऽप्यविशेषाच्चेति स्यात्

श्येनवाक्येऽस्य सम्बन्धं वक्ति मत्पूर्वकमक्रः ॥ २३५ ॥
पुण्यपापात्मकं कर्म बुद्धिस्थं तस्य वासना ॥
आत्माश्रिता, तद्विवेको गतग्रन्थेन वर्णितः ॥ २३६ ॥
अविद्या बुद्धिस्थेयस्थानीयाऽऽत्मनि तिष्ठति ॥
श्येनादिग्रन्थसंदर्भस्तद्विवेकाय वर्ण्यते ॥ २३७ ॥
नैवमात्मन्यविद्या वा वासना वा न वास्तवी ॥
सम्बन्धेति पुरा प्रोक्तं मूर्तामूर्तप्रसङ्गतः ॥ २३८ ॥
सम्बन्धस्तूच्यते स्वात्मस्वभावोऽनवशेषतः ॥
पुञ्जीकृत्योदितो न प्राक् श्येनवाक्ये तु वर्ण्यते ॥ २३९ ॥
अथवा परलोकस्य दृष्टान्तः स्वप्न ईरितः ॥
सुषुप्तिर्मोक्षदृष्टान्तस्तदर्थो ग्रन्थ उत्तरः ॥ २४० ॥
तथा अस्यैतदित्यत्र आप्तकामस्वभावताम् ॥
वक्तुं सुप्तावदुःखत्वं वक्ति श्येननिदर्शनात् ॥ २४१ ॥
श्रुतिः—तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा वि-

---

।वयति *श्येनेत्यादिना ॥२३५॥२३६॥२३७॥ वासनाऽविद्ययो-रसम्बन्धो वास्तवः काल्पनिको वा, तत्र चरमपक्षीकृत्याद्यं दू-षयति *नैवमिति ॥२३८॥ इदानीं स्वात्मसम्बन्धमाह *सम्बन्ध इति ॥ अथस्ततवाक्येषु तत्र तत्र नित्यशुद्धत्वादिकमात्मस्वरूपं प्र-तिपादितमप्येकात्म्यतवाक्ये पिण्डीकृत्य नोक्तमिति तद्वर्णनाय श्येनवा-क्यमित्यर्थः ॥२३९॥ अस्यैव सम्बन्धान्तरमाह *अथवेति॥२४०॥ एवमनेकधा सम्बन्धमुक्त्वा वाक्यमवतारयति *तथा इति ॥ तथा अस्यैतदाप्तकाममित्यत्रात्मनः सुप्तावाप्तकामत्वं वक्ष्यति । तत्र निर्दुःखत्वस्यैव मकमवनीति श्येनवाक्यदृष्टान्तेन तत्समर्थयत इ-त्यर्थः ॥ २४१ ॥

विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियत एव-
मेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न
कंचन कामं कामयते न कंचन स्वप्नं पश्यति ॥ १९ ॥

वा०—नीडे विश्राम्यति श्येनस्तथा सुप्तौ स्वकर्मणः ॥
श्रान्ते जाग्रत्स्वप्नदुःखे त्यक्त्वा विश्राम्यति स्वयम् ॥ २४२ ॥
कामं कामयते नेति जाग्रद्भोगो निषिध्यते ॥
तद्बाह्यान्तरभेदानां ग्रहणात्कंचनेति गीः ॥ २४३ ॥
त्रय आवसथास्तस्य त्रयः स्वप्ना इति श्रुतेः ॥
एकैकस्यामवस्थायामवस्थात्रयमिष्यताम् ॥ २४४ ॥
सुप्त्यादिषु विलीनेषु लीने चित्प्रतिबिम्बके ॥
जाग्रत्स्वप्नभिदा सर्वा लीयते तत्सुषुप्तकम् ॥ २४५ ॥
आत्मस्वभावो निःशेषः पुंजीकृत्येह लक्ष्यते ॥

अस्मिन्भूताकाशे श्येनो वा सुपर्णो वा मन्दवेगो महाकायः श्येनः, वेगवानल्पविग्रहः सुपर्ण इति तयोर्भेदः। विपरिपत्य विहृत्य अतः श्रान्तः सन्पक्षौ संहृत्य संगमय्य, सम्यग्लीयतेऽस्मिन्निति संलयो नीडस्तं प्राप्तुं ध्रियते स्वयमेवात्मना धार्यते। एवमेवायं पुरुष एतस्मा अन्ताय स्वप्नजागरितयोरवसानभूतं ब्रह्म अन्तःप्र-श्रायैतस्मै धावतीति श्रुत्यक्षरार्थः ॥ १९ ॥

वाक्यार्थमाह *नीड इति ॥ २४२ ॥ यत्र सुप्त इत्यादि व्याचष्टे* काममिति ॥ न कश्चन स्वप्नमित्यत्र कंचनेति विशेषण-वैयर्थ्यमाशङ्क्याह* तद्विति ॥ २४३ ॥ तत्र प्रमाणं वदन्स्वप्न-भेदान्दर्शितान्स्मारयति *त्रय इति ॥ २४४ ॥ नन्वेवं सुप्तेरप्यने-कत्वादस्मिन्वाक्ये कीदृशं सुषुप्तं? तत्राह* सुप्त्यादिष्विति ॥ २४५ ॥ एवंविधसुषुप्तिप्रतिपादनफलमाह *आत्मेति। इह सुषुप्त्यवस्थायाम् ।

लिङ्गदेहपरिच्छिन्नो भुङ्क्ते भोग्यानि जाग्रति ॥२४९॥
अथ वासनया स्वप्ने घ्नन्तीवैनं स्वबान्धवाः ॥
अपघ्नन्तीव न तं घ्नन्ति न जयन्ति च वस्तुतः ॥ २५० ॥
भुक्ते कर्मफले लेशो भुक्तिस्थो वासनोच्यते ॥
अविद्योत्कर्षतो भाति जयघातादिवासना ॥ २५१॥
श्रुतिः—अथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥
वा०—अज्ञाने क्षीयमाणेऽथ जाग्रद्देवादिवासना ॥

मिथः संयोगवैषम्यात्तत्साम्याच्च त्रिविधाः स्वप्नदशा भवन्तीति ॥

अथेत्यादेरर्थं वक्तुमुक्तनाडीषु जागरणे जीवस्थितिप्रकारमाह *स्थूलेति ॥ २४९ ॥ जीवस्य जाग्रत्स्थितिमुक्त्वा स्वाप्नीयस्थितिं वक्तुम् अथ यत्रेत्यादि व्याचष्टे *अथेति ॥ जिनन्तीत्यस्य व्याख्या जयन्तीति । इवशब्दसूचितमर्थमाह *न तमिति ॥ २५० ॥ वासनयेत्युक्तं वासनास्वरूपं किमित्यपेक्षायामाह *भुक्त इति ॥ भुक्तं यज्जाग्रत्कर्मफलं तस्य लेशो वासना, सा च स्वप्नभोगदकर्मसहिताविद्यया व्यक्ता सती जयादिरूपेण भातीत्यर्थः ॥ २५१ ॥

हस्तीव विच्छाययतीति विद्रावयतीव गर्तं जीर्णकूपादिकं तत्र पतनमिवात्मानमुपलक्षयतीत्यर्थः । किंबहुना यदेव जागरणे भयं भयहेतु व्याघ्रादि पश्यति तदेवात्र स्वप्नेऽप्यविद्यया तद्भूतया वासनया मन्यते न पुनस्तत्त्वतोऽस्तीति भावः ॥

अथ यत्र देव इवेत्यादेरर्थमाह *अज्ञान इति ॥ अज्ञानशब्देन तत्कार्यभूता वासना लक्ष्यते, तदपकर्षानन्तर्यमथशब्दार्थः । जागरे देवादिविषयाविद्यावासना दृष्टा भवति, सा यत्र स्वप्ने देवोऽस्मीत्यादिमतिं करोति उत्पादयति इति यावत् । सा

मतिं देवोऽस्मि राजाऽस्मीत्येवं स्वप्ने करोति हि ॥२५२॥
विद्यायाः परमोत्कर्षं जाग्रत्स्वाप्न[illegible] ॥
सर्वोऽस्मीति मतिं स्वप्ने करोत्येवेत[illegible] ॥२५३॥
सर्वात्मभावः परमो लोको बाधविवर्जनात् ॥
बाध्यन्ते देवराजाद्या इत्यशब्दस्ततः श्रुतः ॥ २५४ ॥
जयघातादिवद्देवराजादेरपि बाधनम् ॥
लोकप्रसिद्धं कुत्रापि सार्वात्म्यं तु न बाध्यते ॥२५५॥
वेदान्तमानसिद्धत्वाज्जागरे तन्न बाध्यते ॥
स्वप्नेऽपि बाध्यते नैतद्यथावस्त्ववभासनात् ॥२५६॥
इदंशब्दोदितं यावज्जाग्रत्सर्वं तदात्मनि ॥
कल्पितं भूयते तस्मादहमेवेदमित्यदः ॥ २५७ ॥
यः सर्पो रज्जुरेवैषा यथावस्तुनिरूपणे ॥
तथेदं जगदात्मैव जगन्नैवात्मनः पृथक् ॥ २५८ ॥
अतः सर्वोऽस्मीति मतिर्नैव स्वप्नेऽपि विभ्रमः ॥
तत्त्वावेदकमानेन जाता धीर्विभ्रमः कथम् ॥ २५९ ॥

---

व इत्यशब्दान्निर्दिष्टेति हिशब्दार्थः ॥ २५२ ॥ अहमेवेदमित्या- देरर्थमाह *विद्याया इति ॥ २५३ ॥ सोऽस्य परमो लोको इत्येतद् व्याचष्टे *सर्वेति ॥ २५४ ॥ उक्तमेव व्यनक्ति *जयेति *कुत्रापीति, जागरे स्वप्ने वा ॥२५५॥ तदेव विशदयति *वेदांते- ति ॥ २५६ ॥ नन्वहंशब्दस्य कथमहमेवेदमिति इदमा सामाना- धिकरण्यं, जडाजडयोरेकत्वायोगादत आह *इदमिति । अदः, इदं सामानाधिकरण्यमुपपन्नमिति शेषः ॥ २५७ ॥* तदेव दृष्टान्तेन स्पष्टयति *य इति ॥ २५८ ॥ सार्वात्म्यबुद्धेरबाधितत्वमुक्तमुप- संहरति *अत इति ॥ २५९ ॥ उक्तं सार्वात्म्यमनूद्य तन्मात्रत्वं

परमो लोक इत्युक्त्वा सर्वभावस्य वस्तुना ॥
सुषुप्तौ ननु साक्षित्वं सर्वैरप्यनुभूयते ॥ २६० ॥
अन्वद्वैतमपि द्वैतं सुषुप्त्योरिहात्मनि ॥
कस्मादात्मन किं रूपं तस्येत्याशङ्क्य वर्ण्यते ॥ २६१ ॥
यत्साक्षित्वं पुरा प्रोक्तं तदेवाद्वैतमात्मनः ॥
रूपमाणमतः स्यादनुभूतेश्च पुरुषार्थतः ॥ २६२ ॥

श्रुतिः—तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयꣳ रूपं तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् ॥

वा०—शास्त्रप्रसिद्धं तच्छब्दः प्राह प्रत्यक्षतां पुनः ॥
एतच्छब्दः पुनर्वक्ष्यमतिच्छन्दादिनोच्यते ॥ २६३ ॥
शिवमद्वैतमित्यादिशास्त्रबुद्ध्युच्यते ननु ॥
समाधिसुषुप्त्योरद्वैतं स्वयमेवानुभूयते ॥ २६४ ॥
छन्दः कामः कर्म पापं भयं स्यात्कर्मणः फलम् ॥

---

प्रमाणयति *परम इति ॥ २६० ॥ उत्तरवाक्यं शङ्कोत्तरत्वे-
नावतारयति *नन्विति ॥ साक्षित्वस्याद्वैतसाक्षित्वस्याप्यनुभव-
सिद्धत्वात्किमत्र तत्त्वमित्याशङ्कायामुत्तरवाक्यं प्रवृत्तमित्यर्थः
॥ २६१ ॥ वाक्यतात्पर्यमाह *यदिति । अद्वैतस्यागमसिद्ध-
त्वात्सुप्तावनुभवसिद्धत्वात्परमपुरुषार्थत्वाच्च तदेवात्मनस्तत्त्वं, द्वैत-
भियः स्वप्नवद्भ्रमत्वेनाप्युपपत्तेरिति भावः ॥ २६२ ॥ श्रुत्यक्ष-
राणि व्याकुर्वन्पूर्वार्धं विवृणोति *शास्त्रेति ॥ २६३ ॥ नन्वे-
तच्छब्दाभ्यां शास्त्रानुभवसिद्धमद्वैतस्वरूपमित्युक्तं, किं तच्छास्त्रं
को वाऽनुभवस्तत्राह *शिवमिति ॥ २६४ ॥ अतिच्छन्दादिशब्दा

ोत्साेरात्ममात्रकामना सर्वसंपत्ता ॥ ...
त्मप्राप्तिनोऽकामरूपमद्वैतमात्मना ॥ २७८ ॥
भोजनतस्तृप्तस्तदा भोज्यं न वाञ्छति ॥
न्यात्मनि प्राप्ते किमन्यत्काम्यते पुनः ॥२७९॥
काममकामं यत्तच्छोकरहितं तदा ॥
न्तरं पृथक् शोकादिति निःशोकतोच्यते॥२८०॥
हाभिमानश्च धर्माधर्मौ च शोकदाः ॥
ागरणे तयस्सुषुप्तौ च प्रसज्यते ॥ २८१ ॥
ंताऽहमित्यादिदेहत्वभ्रान्तिलोपनात् ॥
त्वयुक्ते देहेऽभिमानः सुप्तस्य नास्ति हि ॥२८२॥
भिमाने सत्येव शोकरागादि सम्भवेत् ॥
था परदेहस्थदुःखस्यात्मन्यवेक्षणात् ॥ २८३ ॥
ागोऽपि नास्त्यत्र पितृत्वस्यानवेक्षणात् ॥

---

पदार्थमाह *कामेति ॥ २७८ ॥ तदेव दृष्टान्तेन स्पष्टय-
म्यभोजनेति ॥ २७९ ॥ रूपं शोकान्तरमित्येतद् व्याचष्टे
ति ॥ शोकांतरमित्यनेन कथं शोकराहित्यमुच्यते तस्य
ःखादित्याशङ्क्याह* शोकेति ॥ अन्तरशब्दः पृथग्वचनः
मा सुप्तौ शोकात्पृथग्भूत इत्युक्ते शोकसम्बन्धाभावाच्छो-
ं सिध्यतीत्यर्थः ॥२८०॥ अत्र पितेत्याद्यवतारयितुं व्या-
माह* नन्विति । सुप्तावपि शोकनिमित्तदेहाभिमानादेः
ोकस्य सम्भावितत्वाच्छोकराहित्योक्तिरयुक्तेत्यर्थः॥२८१॥
त्वाभिमानस्य देहोऽहमिति भ्रांतिमूलत्वात्सुषुप्तस्य च भ्र-
भिमान एव नास्ति कुतः शोकादिरिति श्रुतितात्पर्यं दर्श-
ति* मैवमिति ॥२८२॥ अभिमानाभावेऽपि शोकादिक-
ाशङ्क्य नेत्युदाहरणमाह *देहेति ॥२८३॥ अभिमान्य-

ति न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु न तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥

यद्वै तन्न वदति वदन्वै तन्न वदति नहि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ २६ ॥

यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति नहि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥

यद्वै तन्न मनुते मन्वानो वै तन्न मनुते नहि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥

यद्वै तन्न स्पृशति स्पृशन्वै तन्न स्पृशति नहि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥

यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥

वा०—लब्धरूपचाक्षुषधीवृत्तिद्वाराऽऽत्मा दृष्टिवान्मतः ॥
तथैवमन्यधीवृत्तिद्वारा घ्रात्रादिवान्मतः ॥ ११२ ॥
दृष्टिघ्रात्र्यादिभिः शब्दैर्लक्षितश्च चिदात्मकः ॥

---

रूपादौ घ्राणादिजन्यधीवृत्तिव्याप्यकेन घ्रात्रादिशब्देनापि तत्साक्षी कथ्यते इत्यर्थः ॥ ११२॥ दृष्टिपदं व्याख्याय विपरिलोपो न विद्यत इत्येतद्व्याचष्टे नहीति । तत्र श्लोके वायुकृताद्

न पश्यतीति तस्योक्तिर्द्वितीयाभावतो भवेत् ।
ज्वलन्नपि यथा वह्निर्दाह्याभावान्न दाहकः ॥ ३३४ ॥
नैतद्युक्तं तथात्वादिवस्तुश्रुतिविरोधतः ।
केवलो निर्गुणोऽसङ्गो नेतिनेत्यादिका श्रुतिः ॥ ३३५ ॥
अवाङ्मनसगम्यं यन्निर्गुणं ब्रह्म वर्ण्यते ।
तदेव ह्यात्मनस्तत्त्वमन्यन्मायाविजृम्भितम् ॥ ३३६ ॥
द्रष्टुरित्यादिशब्दानामर्थः पूर्वमुदीरितः ।
तस्मात्सुप्तौ चिदद्वैतं यत्तद्रूपं परात्मनः ॥ ३३७ ॥
एतद् द्रढयितुं प्रोक्ताः पर्याया बहवः श्रुतौ ।
यद्वै न जिघ्रतीत्यादौ योजना दृष्टिवाक्यवत् ॥ ३३८ ॥
अन्धादेर्दृष्ट्यभावेऽपि गन्धादिज्ञानमस्ति हि ।
मा भूत्संशयमभिप्रेत्य प्रोक्तं सर्वाक्षलोपनम् ॥ ३३९ ॥
मतिर्विज्ञातिरित्येते चित्तस्यैव क्रिये उभे ।
संशयो निश्चयश्चेति तयोर्भेदोऽवगम्यते ॥ ३४० ॥

---

दृशानित्यज्ञानवत्त्वाच्च पश्यन्निति प्रयोगसम्भवेऽपि न पश्यतीति कथमुच्यते, तत्राह *नेति । तत्रैव दृष्टान्तमाह* ज्वलन्निति ॥ ३३४ ॥ नेयं कल्पना श्रुतिविरुद्धत्वाच्छोभन इति दूषयति *नेति ॥ श्रुतिविरोधमेव प्रकटयति* केवल इति ॥ श्रुतिरित्यत्रानया श्रुत्येति शेषः ॥ ३३५ ॥ ब्रह्मण एकरूपत्वेऽपि जीवस्य किमायातं तत्राह *तदिति ॥ ३३६ ॥ द्रष्टृत्वादिधर्मरहितत्वे फलितमाह *तस्मादिति ॥ ३३७ ॥ यद्वै तन्न जिघ्रतीत्याद्यनेकपर्यायकथनतात्पर्यमाह *एतदिति ॥ ३३८ ॥ अनेकपर्यायोक्तेस्तात्पर्यान्तरमाह *अन्धादेरिति ॥३३९॥ अत्र मन्तुर्मतेर्विज्ञातुर्विज्ञातेरिति पर्यायद्वयकथनस्य पौनरुक्त्यमाशङ्क्य परिहरति *मतिरिति ॥३४०॥ तयोरेवार्थान्तरमाह *इदमिति ॥ अत्र

इदमुल्लेखवृत्तिरिति [illegible]
अनात्मविषये बुद्धिरहंधीरात्मगोचरा ॥ १४१ ॥
धीवृत्तित्वेऽपि रूपादिर्जन्यते बहिरिन्द्रियैः ॥
वस्तुत्वनिरहंधीश्च न जन्ये चक्षुरादिभिः ॥ १४२ ॥
सर्वेन्द्रियव्यवहृतेर्लोपादद्वैतता चितः ॥
सुषुप्तावनुस्यूतेति स्वात्मरूपं तदीर्यते ॥ १४३ ॥

श्रुतिः—यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥ ३१ ॥

वा०—ननु सर्वजनैर्द्वैतं जागरे स्पष्टमीक्ष्यते ॥
सद्वैत एव किं न स्यादात्मेत्याशङ्क्य वर्ण्यते ॥ १४४ ॥
यत्रैव जागरे स्वस्मादन्यत्किञ्चिदिति भ्रमः ॥
तत्रैवान्यः स्वयं द्रष्टा दृश्यमन्यदपेक्ष्यते ॥ १४५ ॥
द्वैतभ्रमस्य सिद्ध्यर्थमिवशब्दः प्रयुज्यते ॥
स्वप्नभ्रान्तेर्वर्णनार्थमिवशब्दोक्तिदर्शनात् ॥ १४६ ॥

---

मतिशब्देनानात्मविषयस्मृतिरुच्यते, विज्ञातिशब्देनाहमाकारान्तःकरणवृत्तिरिति भेदः ॥ १४१ ॥ अनयोर्वृत्त्योर्दृष्टिघ्रात्यादिवृत्तिभ्यो वैलक्षण्यं चास्मिन्पक्षे सिध्यतीति विशेषमाह *धीवृत्तीति ॥ १४२ ॥ प्रकृतवाक्यतात्पर्यमुपसंहरति *सर्वेति ॥ १४३ ॥ शङ्कापूर्वकं यत्र वा अन्यदिवेत्याद्यवतारयति *नन्विति ॥ १४४ ॥ अक्षराणि व्याचष्टे *यत्रेति ॥ १४५ ॥ अन्यदिवेत्यत्र इव शब्दार्थमाह *द्वैतेति ॥ इवशब्दप्रयोगमात्रेण कथं द्वैतमिथ्यात्वं तत्राह *स्वप्नेति ॥ १४६ ॥ इवार्थमभिनयति *आकाश

आकाशकुसुमिव शैलाग्रमग्राह्यमिव काननम् ॥
इत्यादिवचसा स्वप्नं वर्णयन्ति हि लौकिकाः ॥१४७॥
बाध्यते जाग्रति स्वप्नः स्वप्ने जाग्रच्च बाध्यते ॥
चिदद्वैतं तु न क्वापि बाध्यते वास्तवं ततः ॥ १४८ ॥
चितो न बाधकं द्वैतं चित्प्रसादेन भासनात् ॥
अबाध्यत्वाद्वास्तवत्वं चिदद्वैतस्य सुस्थितम् ॥ १४९ ॥
श्रुतिः—सलिल एको द्रष्टाऽद्वैतो भवति ॥
वा०—यद्वै तदित्युपक्रम्य व्याख्यातं वस्तु विस्तरात् ॥
सलिलादिगिरा तस्य क्रियते ह्युपसंहृतिः ॥ १५० ॥
आत्मा सलिलवच्छुद्धः कार्यकारणहानतः ॥
स्वतोऽवबोधमात्रत्वात्कुतोऽविद्यादिसङ्गतिः ॥१५१॥
अन्तरेणापि सम्बन्धं कार्यकारणवस्तुनः ॥

मिति । उत्सेव महाराज इत्यादिश्रुतिप्रसिद्धिसूचनार्थो हि-शब्दः ॥ १४७ ॥ किञ्च बाधितत्वाच्च न द्वैतस्य सत्यतेत्याह *बाध्यते इति । सुप्तशब्दो मुक्तेरुपलक्षणम् ॥ १४८ ॥ न केवलं बाधानुपलम्भादद्वैतस्याबाध्यत्वं, किन्तु बाधहेत्वनिरूपणाच्चे-त्याह *चित इति । द्वैतोत्पत्तिविनाशसाक्षित्वेन कालत्रयेऽपि स्व-तश्चैतन्यस्य न द्वैतेन बाधसम्भव इत्यर्थः । बाधाभावे फलितमाह *अबाध्यत्वादिति ॥ १४९ ॥ सलिलादिवाक्यं तात्पर्योक्तिपूर्व-कमादत्ते *यदिति ॥१५०॥ तत्र सलिलशब्दस्य विवक्षितमर्थ-माह *आत्मेति ॥ अविद्याद्वारा जगद्धेतुत्वादात्मनः कथं तत्स-म्बन्धाभावस्तत्राह *स्वत इति ॥ वास्तवसम्बन्धाभावेन शुद्ध-स्योक्तिर्युक्तेति भावः ॥ १५१ ॥ एकशब्दमादत्तेोपरत्वेनो-

स्वतोऽनेकात्मकं तत्स्यादिभ्यो व्यावृत्त्यैकतोच्यते ॥३५२॥
न कपित्थादिवत्तत्त्वं स्वतोऽनेकस्वभावकम् ॥
अखण्डैकरसे तस्मिन् कुतः स्यात्स्वगता भिदा ॥३५३॥
सजातीयनिषेधो वा एकशब्देन भण्यते ॥
सलिलं कल्प्या विजातीयसम्बन्धो विनिवारितः ॥३५४॥
एकशब्दो न संख्यार्थः संख्येयासम्भवादिह ॥
अद्वितीयत्वमेवार्थो विजातीयार्थनिषेधनः ॥ ३५५ ॥
सदेवेत्यादिना चास्य तथा सत्यविरुद्धता ॥
प्रत्यगात्मावभात्येवं प्रत्यग्दृष्टेः प्रसिध्यति ॥ ३५६ ॥
अकारकस्वभावत्वमद्वैतेत्यभिधीयते ॥
यत्र हि द्वैतमित्युक्तेर्यत्र त्वस्येति चारणात् ॥ ३५७ ॥
स्वतः पूर्णात्मकं ज्योतिर्यदद्वैतेति चोच्यते ॥

स्थापयति *अन्तरेणेति ॥३५२॥ तस्यार्थमाह *नेति ॥३५३॥ एकशब्दस्यार्थान्तरमाह *सजातीयेति । एकशब्दस्यान्यभेदप्रतिनिरासार्थत्वे कथमनात्मभेदनिषेधसिद्धिरत आह *सलिलेति ॥ ३५४ ॥ एकपदस्य संख्यावाचिनो गुणगुणिसम्बन्धपरत्वात् विवक्षितार्थवैकल्यमाशङ्क्याह *एकेति । इहेत्यात्मोक्तिः । नहि तस्मिन्नेकत्वगुणः, निर्गुणत्वश्रुतेरित्यर्थः ॥ संख्यावाचित्वासम्भवं सिद्धवदाह *अद्वितीयेति ॥३५५॥ एकशब्दस्य लोकव्यवहारे संख्यावाचित्वप्रसिद्धेर्नाद्वितीयार्थत्वमित्याशङ्क्य श्रुत्यन्तराविरोधान्नैवमित्याह *सदिति । तथा सति एकपदस्याद्वितीयार्थत्वे सतीति यावत् ॥३५६॥ एको द्रष्टेत्यत्राद्वैतेति पदच्छेदं कृत्वा तस्यार्थमाह *अकारकेति ॥ द्वैतेतिपदच्छेदपक्षे तस्यार्थमाह *यत्रेति तत्पूर्णात्मकं ज्योतिः तदेव द्रष्टृशब्देन लक्षणयोच्यत इत्यर्थः

अविद्याकार्यराहित्यादद्वैतोऽयं भवेत्स्वतः ॥ ३५८ ॥
द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते ॥
तन्निषेधेन चाद्वैतं प्रत्यग्वस्त्वभिधीयते ॥ ३५९ ॥
प्रत्यग्दृष्ट्यव्यवहितेः प्रत्यक्षादात्मवस्तुनः ॥
एष इत्यात्मनिर्देशो यत्साक्षादिति च श्रुतेः ॥ ३६० ॥

श्रुतिः—एष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा संपत् ॥

वा०—अव्यावृत्ताननुगतं निःसामान्यविशेषवत् ॥
ब्रह्मेति मुख्यवृत्त्येह वस्तु श्रुत्याऽभिधीयते ॥ ३६१ ॥
तथा लोकयतेर्धातोर्दर्शनार्थत्वहेतुतः ॥
प्रकृतत्वात्तथा दृष्टेर्लोकनं लोक उच्यते ॥ ३६२ ॥

॥३५७॥ अद्वैतो भवतीत्यत्राद्वैतशब्दार्थमाह *अविद्येति॥३५८॥ ननु नञर्थस्यैव विध्यादन्यतमानिर्धारणादृते कथमद्वैतं निर्धार्यत इत्याशङ्क्य द्वैतशब्दस्यावयवशोऽर्थं वदंस्तदभावोऽद्वैतमित्याह *द्विधेति॥ अद्वैतस्य विरहात्मकाभावावसानत्वं व्यावर्तयति *प्रत्यगिति॥३५९॥ एष ब्रह्मलोक इत्यादिवाक्यस्थमेषशब्दं व्याचष्टे *प्रत्यग्दृष्टीति । आत्मन एषशब्दार्हत्वे प्रत्यक्षत्वं हेतुः, तच्चाव्यवहितत्वमित्युक्त्वा तस्य प्रत्यक्षत्वे श्रुतिमप्याह *यदिति ॥ ३६० ॥ ब्रह्मशब्दार्थमाह *अव्यावृत्तेति ॥ तत्र हेतुः निःसामान्येति । कमलासनादिवाचकब्रह्मशब्दादस्य विशेषमाह *मुख्ययेति । इहेति ब्रह्मलोकशब्दनिर्देशः । अव्यावृत्ताननुगतं वस्तु ब्रह्मेति श्रुत्योच्यत इत्यर्थः ॥३६१॥ लोकशब्दस्य योगरूढिविषयत्वं प्रकरणादिना व्यावर्तयन् विवक्षितमाह *तथेति ॥३६२॥ अवयवार्थमुक्त्वा ब्रह्मलोकशब्दस्य समासमाह *कर्म-

कर्मधारय एवातः समासोऽत्रोपपद्यते ॥
न तु षष्ठीसमासोऽत्र विभागस्याप्रसिद्धितः ॥ १६३ ॥
ब्रह्मणो लोक इत्युक्ते भाति ब्रह्मान्यलोकभिदा ॥
ब्रह्मात्मत्व इत्यादिवाक्यैस्तच्च विरुध्यते ॥ १६४ ॥
ब्रह्मैव लोक इत्युक्ते ब्रह्मात्मत्वता स्फुटा ॥
एतच्छब्दब्रह्मलोकशब्दावैकात्म्यभासकौ ॥ १६५ ॥
न प्रत्यगुव्यतिरेकेण ब्रह्मत्वमुपपद्यते ॥
ब्रह्मणो व्यतिरेकेण प्रत्यक्त्वं न चिमत्मना ॥ १६६ ॥
अनयोरैक्यसंमोहात्परोक्षत्वयकल्पने ॥
संसारोऽयमतो मोहसमुच्छित्तौ विमुक्तता ॥ १६७ ॥
अतोऽशेषमहानर्थहेतोर्मोहस्य हानये ॥
एष इत्यादिवाक्योक्तिः सम्यग्दर्शनजन्मना ॥ १६८ ॥
इतिशब्दो यथोक्तार्थपरामर्शं करोति हि ॥
ऐतिह्यार्थस्तथाहेति संज्ञादित्यभिमन्त्रणम् ॥ १६९ ॥

---

ति ॥ १६३ ॥ षष्ठीसमासासम्भवमेव प्रपञ्चयति *ब्रह्मण इति ॥ तत्र तथा सतीत्यर्थः ॥ १६४ ॥ कर्मधारये गुणमाह *ब्रह्मेति । समासं व्यवस्थाप्य एष ब्रह्मलोक इतिपदयोस्तत्त्वमसीत्यादिवदखण्डार्थतामाह *एतदिति ॥ १६५ ॥ तयोरैक्यात्मभासकत्वे युक्तिमाह *नेति ॥ १६६ ॥ ब्रह्मात्मनोरैक्यमस्ति चेत्कथं संसारप्रतीतिः, तत्प्रतीतौ वा कथं ब्रह्मणो नित्यमुक्तता तत्राह *अनयोरिति ॥ १६७ ॥ वाक्यतात्पर्यमुपसंहरति *अत इति ॥ मोहध्वस्तौ मुक्तिरतःशब्दार्थः ॥ १६८ ॥ संज्ञादित्यादेरवयवार्थमाह *इतिशब्द इति । तस्योक्तार्थपरामर्शसामर्थ्यद्योती हिशब्दः । अभिमन्त्रणं सम्बोधनम् ॥ १६९ ॥ एत-

इत्युक्तेन प्रकारेण मुमुक्षुं जनकं श्रुतिः ॥
अन्वशात्सकलानर्थहेत्वविद्यापनुत्तये ॥ ३७० ॥
व्युत्थाप्याख्यायिकातो नः श्रुतिर्वचनमब्रवीत् ॥
अस्माकमादरस्तेन स्यादद्वैते ह्यगात्मनि ॥ ३७१ ॥
पुनराख्यानरूपेण श्रुतिर्भूत्वा ह्यगात्मनः ॥
परमानन्दरूपत्वं प्रतिपादयति श्रुतिः ॥ ३७२ ॥
विज्ञानपुरुषस्यास्य योक्ता ब्रह्मात्मता पुरा ॥
नैष्ठिकी गतिरेषाऽत्र गत्यन्तरसमाप्तितः ॥ ३७३ ॥
इतोऽन्यगतयः सर्वाः क्षयिसाधनसंश्रयात् ॥
क्षयिण्योऽतो हि परमा गतिरेषैव नापरा ॥ ३७४ ॥
अविद्यामात्रहेतुत्वात्कामकर्मादिसाधनाः ॥
गतयोऽपरमाः सर्वा मायास्वप्नगती यथा ॥ ३७५ ॥

---

पित्यादेरितिशब्दार्थानुवादपूर्वकमर्थमाह *इत्युक्तेनेति ॥ ३७० ॥ आख्यायिकायामिदं वाक्यमसङ्गतमित्याशङ्क्य एष इत्यादि न मुनेर्वाक्यं किन्तु श्रुतेरेवेत्याह *व्युत्थाप्येति । व्युत्थानफलमाह *अस्माकमिति ॥ केवलश्रुत्युक्तेऽर्थेऽधिकविश्वासो भवतीति ॥ ३७१ ॥ एषेत्याद्युत्तरसन्दर्भतात्पर्यमाह *पुनरिति ॥ ३७२ ॥ एषाऽस्य परमा गतिरित्यस्यार्थमाह *विज्ञानेति ॥ बुद्ध्युपाधिकस्य पूर्ववाक्ये ब्रह्मतोक्ता, एषैवास्य नैष्ठिकी गतिः, गत्यन्तराणामत्रैव समाप्तेरित्यर्थः ॥ ३७३ ॥ परमत्वं साधयति *इत इति ॥ गतिसाम्यादस्यापि क्षयिष्णुत्वमाशङ्क्य ज्ञानस्य विषयतोऽक्षयत्वात्तदधीनफलमक्षयमिति विवक्षन्नाह *अतो हीति ॥ हि यतः ॥ ३७४ ॥ गत्यन्तराणामपरमत्वं दृष्टान्तेनाह *अविद्येति ॥ मुक्तिरेव परमा गतिर्न कर्मफलमिति समुदायार्थः ॥ ३७५ ॥ एषाऽस्य परमा सम्पदित्यस्यार्थमाह

संपच परमैवैव ...स्वाभ्युपलक्षणम् ॥
उत्कर्षातिशयो ...इति भण्यते ॥ १७६ ॥
श्रुतिः—एषोऽस्य परमो लोक एषोऽस्य परम आनन्द
एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति॥१२॥
वा०—एषोऽस्य परमो लोको लोकास्वरूपं ह्यविक्रिय: ॥
अविक्रियसाधनापेक्षा न स्वेषोऽसाधनाश्रयात् ॥१७७॥
ब्रह्मैव सन्स्वतो यस्माद्ब्रह्माप्येत्यवधारणम् ॥
तदविद्याविरोधेन मुक्तिर्नातोऽन्यसाधनात् ॥ १७८ ॥
लोकशब्दस्य मुख्यार्थ आत्मैवेह यतस्ततः ॥
कर्मादिहेतुसाध्येषु गौणी लोकार्थता भवेत् ॥ २७९ ॥
न कर्मणा कर्नीयस्ता वृद्धिर्वा नान्तरात्मनः ॥
इति बाहुमिवोद्धृत्य वेदान्तैर्घोषणा कृता ॥१८० ॥

---

*सम्पच्चेति ॥ अवधारणे हेतुमाह *मोहेति ॥ का पुनः सम्प-
त्नाम परमगतेरर्थान्तरं, तथाच पूर्वेण गतार्थता तत्राह *उ-
त्कर्षेति ॥ उत्कृष्टोऽत्युत्तमः परमा गतिरतो न पौनरुक्त्यमिति
भावः ॥ १७६ ॥ एषोऽस्य परो लोक इत्यस्यार्थमाह *एष
इति ॥ १७७ ॥ मोक्षस्यासाधनाश्रयत्वमसिद्धं कर्मज्ञानापेक्षत्वा-
दित्याशङ्क्याह *ब्रह्मेति ॥ प्रतिबन्धध्वस्तौ ज्ञानस्योपयोगेऽपि
न कर्म साक्षान्मोक्षे उपकरोतीति भावः ॥ १७८ ॥ मोक्षस्य
ब्रह्मलोकशब्दितस्य लोकत्वसाम्यात्फलत्वं स्वर्गादिवदित्या-
शङ्क्याह *लोकेति ॥ रूढियुत्पत्तिभ्यामात्मन एव लोकशब्दा-
र्थत्वात्स्वर्गादिषु तच्छब्दो गौणः, अन्याय्यश्चानेकार्थत्वमिति
न्यायादिति भावः ॥ १७९ ॥ ननु लोकस्य कर्मसाध्यत्वे प्र-
सिद्धेरात्मैव लोकश्चेत् कर्मसाध्यः स भविष्यति, नेत्याह *नेति ।

आनन्दः परमो ह्येष सुखोत्कर्षप्रकाशितः ॥
सर्वानन्दातिशायित्वात् [illegible] ॥ [illegible] ॥
विषयस्पर्शजानन्दाः सापेक्षास्तु [illegible] ॥
आपेक्षिकत्वात् [illegible] एव ते ॥ ३८२ ॥
कूटस्थात्मस्वभावत्वात्सर्वसाधननिःस्पृहः ॥
सर्वानन्दातिवर्तित्वादानन्दः परमो मतः ॥ ३८३ ॥
आनन्दः परमोऽस्यैव इत्युक्तार्थप्रसिद्धये ॥
एतस्यैवेति वचसामथार्थो हेतुरुच्यते ॥ ३८४ ॥
एतस्यैव यथोक्तस्य सर्वानन्दातिवर्तिनः ॥
उपजीवन्ति भूतानि ब्रह्मानन्दस्य विप्लुषः ॥३८५॥
एष एवंविधो यस्मादानन्दः परमः स्मृतः ॥
आनन्दानतिशेतेऽन्यान् सर्वानस्यैव कृत्स्नतः॥३८६॥

॥ ३८० ॥ एषोऽस्य परम आनन्द इत्यस्यार्थमाह *आनन्द इति ॥ आत्मानन्दस्य परमत्वे हेतुः *सुखेति । तत्रापि हेतुः सर्वेति । तदेव कथं तदाह *तथा चेति ॥ स यो मनुष्याणामित्यादिप्रकरणे आत्मनः सर्वानन्दातिशायित्वं वक्ष्यत इत्यर्थः ॥ ३८१ ॥ विषयानन्दानामपि हिरण्यगर्भादीनां परमत्वात्कथं परम इत्यात्मानन्द एव विशेष्यते तत्राह *विषयेति ॥ ३८२ ॥ तर्हि तद्वदात्मसुखस्यापि सुखत्वाविशेषान्न परमत्वं तत्राह *कूटस्थेति ॥ ३८३ ॥ आत्मसुखमेवोत्कृष्टमितरन्निकृष्टमित्यत्राबाधितहेतुसमर्थपुरस्वाक्यमित्याह *आनंद इति ॥ ३८४ ॥ वाक्यं योजयति *एतस्येति । यथोक्तस्येत्यस्य व्याख्या—सर्वानन्देति ॥ ३८५ ॥ इत्यर्थकमनूद्य साध्यार्थं निगमयति *एष इति ॥ परमत्वं व्याकरोति *आनन्दानिति ॥ तत्र हेतुः *अस्येति ॥ ३८६ ॥ आनन्दस्य

कृत्स्नोऽपि वेद आनन्दस्तदविवेकहेतुना ॥
बुद्ध्यानुभवकालेऽप्यानन्दोऽस्तीति व्यपदिश्यते ॥ १८७ ॥
श्रुतिः-स यो मनुष्याणां राद्धः समृद्धो
षामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनु-
ष्याणां परम आनन्दः ॥
वा०-तन्मात्रायामेवैनं बुबोधयिषते श्रुतिः ॥
लवणाब्धिर्यथा नद्यां बुध्यते लवणोदकात् ॥ १८८ ॥
यावद्यावत्समीपस्था लवणाब्धेर्महानदी ॥
भासते लवणाधिक्यं तावत्तावन्नदीजले ॥ १८९ ॥
एवं च दूरग्रामस्थः स्वादयन् लवणं जले ॥
नदीतीरे क्रमाद्गच्छेल्लवणाब्धिं स पश्यति ॥ १९० ॥
तथैव मानुषानन्दमारभ्योत्तरवृद्धितः ॥
बुद्ध्वा हैरण्यगर्भान्तं परानन्दं प्रबुध्यते ॥ १९१ ॥
मनुष्यमध्ये यः कोऽपि संसिद्धोऽवयवैर्दृढः ॥
कृत्स्नसाधनसंपत्त्या समृद्धोऽपि भवेदसौ ॥ १९२ ॥

---

कृत्स्नत्वे कथं मात्रेति व्यपदेशस्तत्राह *कृत्स्नोऽपीति ॥ पूर्णस्यानन्दस्य अविद्योत्थबुद्ध्यादिसम्बन्धान्मात्रेति व्यपदेशार्हतेत्यर्थः ॥ १८७ ॥ स यो मनुष्याणामित्यादेस्तात्पर्यमाह *तन्मात्रेति ॥ १८८ ॥ नद्यां लवणोदकदर्शनाल्लवणाब्धिं बुध्यत इत्युक्तं व्यनक्ति *यावदित्यादिना ॥१८९॥१९०॥ एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिकमाह *तथेति ॥ १९१ ॥ तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे *मनुष्येति ॥ समृद्धशब्दस्य राद्धशब्देनापुनरुक्तमर्थमाह *कृत्स्नेति ॥ १९२ ॥ पदद्वयार्थं पिण्डीकृत्य निगमयति *वाद्यैरिति ॥ सर्वेषामधिपतिरित्येतद्व्याचष्टे

भार्याऽराज्यादिभिश्चैवं सम्पन्नैरखिलैः सुखैः ॥
सर्वेषामधिपो भूत्वा काम्यभोगैर्न विह्वलः ॥ १९३ ॥
मानुष्यकेण भोगेन संपन्नानां नृणामिह ॥
संपन्नोऽतिशयेनातः संपन्नतम उच्यते ॥ १९४ ॥
सर्वैर्मानुष्यकैर्भोगैः संपन्नो न तु दैविकैः ॥
आनन्द एष परमो मनुष्याणामिहोच्यते ॥ १९५ ॥
श्रुतिः—अथ ये शतं मनुष्याणामानन्दाः स एकः पितृणां जितलोकानामानन्दोऽथ ये शतं पितृणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते । अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥

*सर्वेषामिति ॥ १९३ ॥ सर्वैरित्यादेरर्थमाह *मानुष्यकेणेति ॥ १९४ ॥ मानुष्यकैरिति विशेषणतात्पर्यमाह *सर्वैरिति ॥ स मनुष्याणामित्यादेरर्थमाह *आनन्देति ॥ पूर्वोक्तसकलविशेषणविशिष्टोऽनतिशयमनुष्यभोगभोगी युधिष्ठिरादिर्मनुष्याणां परम आनन्दः, वस्तुतः आनन्दानन्दिभेदाभावादिति भावः ॥ १९५ ॥ अथ ये शतं मनुष्याणामानन्दा इत्यादेरर्थमाह *शतकृत्व इति । तत्तदानन्दप्रदर्शनानन्तरं तत्र तत्र

ज्ञानाधिकोऽयमानन्दः पूर्वस्मादुत्तरक्रमात् ॥ पितरो गन्धर्वा देवा आजानदेवाः ॥
पितरोऽग्निष्वात्तमुख्या गन्धर्वा देवगायकाः ॥
कर्मदेवाः ज्योतिष्टोमादिना स्वर्गं प्राप्ताः स्युः कर्मदेवताः ॥४०३॥
सृष्टेराजननादादौ देवत्वं ये प्रपेदिरे ॥
आजानदेवास्तेऽत्र स्युः पूर्वेभ्यः सूक्ष्ममूर्तयः ॥४०४॥
नानाभक्षोपघातार्थं हेतूनां बहुलत्वतः ॥
पूर्वानन्देभ्य एतेषामानन्दोऽभ्यधिको मतः ॥ ४०५ ॥
सूक्ष्मभूतारब्धतया सूक्ष्मत्वं न त्विहाल्पता ॥
शीतोष्णादि न देहेऽस्ति सूक्ष्मे स्थूलशरीरवत् ॥४०६॥
श्रोत्रियो वेदशास्त्रज्ञो निष्पापो ब्रह्मवित्त्वतः ॥
भोग्यदोषाभिविज्ञास्ते नातः कामेन हन्यते ॥४०७॥
आजानदेवानन्देन समं स्याच्छ्रोत्रिये सुखम् ॥

---

सिद्धमर्थं संकलयति *ज्ञानेति ॥ ४०२ ॥ तत्र पर्यायचतुष्टयमाते-
पादिनाग्निपितृगन्धर्वकर्मदेवाजानदेवान् विभजते *पितर इत्या-
दिना ॥ ४०३ ॥ तेषां सुखतारतम्ये हेतुमाह *पूर्वेभ्य इति ॥
पूर्वपूर्वेभ्य इत्यर्थः ॥४०४॥ तेषामुत्तरोत्तरानन्दाधिक्ये हेत्वन्तरमाह
*नानेति ॥ ४०५ ॥ सूक्ष्ममूर्तय इत्युक्तं विवृणोति *सूक्ष्मेति ।
सूक्ष्मभूतारब्धत्वं च गार्गिब्राह्मणोक्तमन्त्रानुसन्धेयम् । सूक्ष्मत्वेऽपि
कथं दुःखाभावः शरीरत्वाविशेषादित्याह *शीतेति ॥ ४०६ ॥
यश्च श्रोत्रिय इत्यादि व्याचष्टे *श्रोत्रिय इति ॥ अवृजिनपद-
व्याख्या निष्पाप इति । तत्र हेतुः *ब्रह्मेति ॥ अनादिभवपरंप-
रार्जितसर्वपापानां ब्रह्मसाक्षात्कारं विना निःशेषं निवृत्त्ययोगा-
दिति भावः ॥ तस्याकामहतत्वमुपपादयति *भोग्येति ॥ ४०७ ॥
अपेक्षितं पूरयति *आजानेति ॥ स एकः प्रजापतिलोक आ-

यान्तं भूभुजं [illegible] ॥
एवं पञ्चविभाषाय प्रतीक्षन्तेऽभिलाषा ब्रह्म ॥४४२॥
कर्मणामहमिव समायाति ब्रह्म पुत्रादिरूपतः ॥
जनायनेन्तरे वाऽयमायात्ययमेव सर्वथा ॥ ४४३ ॥
क्षीरं पातुमियं धेनुरियं दोलाऽस्य लालने ॥
इति संपाद्य तद्योगमासनं राजसूयवत् ॥ ४४४ ॥
अनेन जीवमत्याग्रप्रवेशस्य विवक्षया ॥
ब्रह्मैव पुत्ररूपेण समायातीत्यभिज्ञगीः ॥ ४४५ ॥
नन्विन्द्रियाणि प्रेतस्य लीयन्ते वपुषा सह ॥
इत्याहुस्तार्किका ब्रह्म निरुपाधि कथं व्रजेत् ॥४४६॥
श्रुतिः—तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥

इत्युपनिषदि तृतीयं ब्राह्मणं समाप्तम् ।

---

कर्मफलभोक्तारं जीवमिति यावत् ॥ ४४२ ॥ प्रतीक्षन्ते इत्युक्तमभिनयति *कर्मणामित्यादिना ॥४४३॥४४४॥ पुत्रो मे भविष्यतीत्येवं मन्यंते जना ननु ब्रह्म पुत्रेणायातीति तत्कथमुच्यते श्रुत्या इदं ब्रह्म यातीति तत्राह *अनेनेति ॥ वस्तुतो जीवस्य ब्रह्मत्वा द्विवेकिप्रसिद्धिमादाय श्रुतिरेवमुक्तवतीत्यर्थः ॥ ४४५ ॥ उत्तर-कंडिकाव्यावर्त्यांशंकामाह *नन्विति ॥ ४४६ ॥ शंकोत्तर-त्वेन कंडिकामवतारयति *प्राणेति ॥ ४४७ ॥ अक्षराणि यो-जयति *राजानमिति ॥ ४४८ ॥

इति वार्तिकसारटीकायां तृतीयं ब्राह्मणं समाप्तम् ॥

वा०-तमायान्तीति [illegible] विवक्षया ॥
प्राणा [illegible] कर्मके [illegible] श्रुतिः ॥४५७॥
राजानमभिपिपासन्तमभिमुख्येव सेवितुम् ॥
आयान्त्युपायन [illegible] ॥४५८॥
इति वार्त्तिकसारे तृतीयं ब्राह्मणं समाप्तम् ॥

वा०-तृतीयब्राह्मणे प्रोक्ता देहे स्वप्नादिसंसृतिः ।
देहान्तरेषु संसारो मुक्तिश्चाथ प्रवक्ष्यते ॥ १ ॥
श्रुतिः-स यत्रायमात्माऽबल्यं न्येत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ॥
वा०-स मुमूर्षुर्यदा देहे दौर्बल्यं प्राप्य मूढताम् ॥
प्राप्नोतीव तदा तं वागाद्या आयान्ति देहिनम् ॥२॥
बोधमात्रैकयाथात्म्यान्नायं संमोहभाग्यतः ॥
संमूढबुद्धिसाक्षित्वात्संमूढ इव भाव्यतः ॥ ३ ॥
उत्क्रान्तिकाले प्राणानां गोलकादार्थ्यहेतुका ॥
स्वगोचरेष्वसक्तिर्या संमोहो ऽसाविहात्मनः ॥ ४ ॥

---

वृत्तमनूद्य अवस्थब्राह्मणार्थं संगृह्णाति *तृतीयेति ॥ १ ॥
स यत्रेत्यादि व्याचष्टे * स इति ॥ २ ॥

सोऽयं प्रकृतसंसारी यत्र यदा ऽबल्यं दौर्बल्यं नि एत्य प्राप्य संमोहं मूढतां नि एति प्राप्नोतीव अथ तस्मिन्काले एनं जीवं वागादयः सर्वे प्राणा अभितः समायान्तीत्यर्थः ॥ २ ॥

संमोहमिवेत्यत्रेवशब्दसूचितमर्थमाह *बोधेति ॥ ३ ॥ अथ संमोहशब्देन विवक्षितमाह *उत्क्रान्तीति ॥ ४ ॥ अथैनमेते प्राणा अभिसमायन्तीति पुनरुक्तं [illegible] परिहरन्स एता

देहं विना [illegible]
विकर्तृ कर्म, वोढ्री तु पूर्वयोर्वासनैव हि ॥ ४६ ॥
समर्था सैव तं यस्मादनुगन्तुं ज्ञानकर्मणी ॥
नरस्यान्तः प्रधानत्वात्ताभ्यां सा गृह्यते पृथक् ॥ ४७ ॥
ननु जीवगतौ वादिविवादो बहुधेष्यते ॥
वृक्षाद्वृक्षान्तरं पक्षी यात्येवमिति केचन ॥ ४८ ॥
आतिवाहिकदेहेन यान्ति नावा जले यथा ॥
प्रभाया इव सङ्कोचविकासावात्मनो गतिः ॥ ४९ ॥
सर्वगस्य मनोमात्रं गच्छेद्देहान्तरं प्रति ॥

दिकं विद्याफलम्, अथ—तद्वत्, कर्म विकर्तृ विकारस्यावयवोपचयस्य हेतुः, वासना तु पूर्वयोर्विद्याकर्मणोर्वोढ्री निर्वाहिका। तथा च तदुत्पत्तिहेतुत्वाच्च तयोस्तयोर्निर्वाहकत्वेन प्राधान्यं सिध्यतीत्यर्थः ॥ ४६ ॥ वासनाप्राधान्यमुपसंहरन्फलितमाह *समर्थेति ॥ ४७ ॥

एवं पूर्वप्रज्ञाशब्दितया भुक्तफलशेषात्मकवासनया सह विद्याकर्मणी अपूर्वात्मना एवं नरमन्वारभेते अनुगच्छत इत्युक्तम्, इदानीं तृणजलूकावाक्यमवतारयितुं भूमिकामाह *नन्विति ॥ वादिविवादमेव प्रकटयन्नादौ दिगम्बरमतमाह *वृक्षादिति ॥ ४८ ॥ देवतावादिमतमाह *आतिवाहिकेति ॥ देवतामयेन देहेन पिण्डितं जीवं परलोकं नयति सोऽयमातिवाहिको देहस्तेनेति यावत् । तत्र दृष्टान्तमाह *नावेति ॥

दिगम्बरैकदेशिमतमाह *प्रभाया इति ॥ ४९ ॥

वैशेषिकादिमतमाह *सर्वगस्येति ॥

इत्युक्त्वा [illegible] पुरुषान्तरे ॥ ५० ॥

इति पञ्च मतानि स्युः श्रुतिस्तु स्वयमेव सा ॥

श्रुतिः—तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्य-मात्रमाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरति ॥ १ ॥

वा०—जीवस्तृणजलूकेव देहाद्देहान्तरं व्रजेत् ॥ ५१

जलूका हि तृणाग्रस्था स्वमुखेन तृणान्तरम् ॥

अवलम्ब्य वपुः शिष्टं तत्सर्वञ्चोपसंहरेत् ॥ ५२ ॥

लिङ्गोपाधिक आत्माऽपि क्रियाशक्त्युपसंहृतेः ॥

पातयित्वा वपुर्ज्ञानशक्तिं संहरते तथा ॥ ५३ ॥

देहस्थ एव धीवृत्त्या भावयन्वपुरन्तरम् ॥

लिङ्गोपाधिकमात्मानं प्रापयेदन्यदेहकम् ॥ ५४ ॥

ननु देहान्तरारम्भ उपादानं किमात्मनः ॥

एतद्देहारम्भकं यत्तदेवोतान्यदीर्यताम् ॥ ५५ ॥

सांख्यमतमाह *इत्युक्त्वेति ॥ ५० ॥ सर्वपक्षमुपसंहरति *इता-ति । उपरवाक्यमादाय सिद्धांतयति *श्रुतिरिति ॥ वाक्यार्थं संक्षिपति *जीवइति ॥ ५१ ॥ दृष्टांतवाक्यं व्याचष्टे *जलूकेति ॥ अन्यमाक्रममित्यस्य व्याख्या—तृणांतरमिति ॥५२॥ दार्ष्टांतिकवाक्यं विभजते *लिङ्गेति ॥ निहत्येत्यस्य व्याख्या—पातयित्वेति । अविद्यां गमयित्वेत्येतद् व्याचष्टे *ज्ञानशक्तिमिति ॥ ५३ ॥ अन्य-माक्रममित्यादेरर्थमाह *देहस्थ इति ॥ ५४ ॥ पेशस्कारीवा-न्यन्नवतरमित्यादेरुपादानमाह *नन्विति ॥ किमाद्-सूचितं विकल्पमाह *एतदिति ॥ ५५ ॥ उपरवाक्यमुपर-

श्रुतिः—तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्य-न्नवतरं कल्याणतरं रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥ ४ ॥

वा०—सुवर्णकारः स्वर्णांशमादायान्यन्नवं नवम् ॥
तेनैव कुरुते भूष उपमृद्नाति यत्नतः ॥ ५६ ॥
पूर्वभूषणमालिन्ये भङ्गे वाऽप्यतिनूतनम् ॥
अतिरम्यं च कुरुते तथैवेहापि गम्यताम् ॥ ५७ ॥
देहारम्भकभूतानि यानि पूर्वाणि वेष्टितः ॥
तैर्लिङ्गोपाधिको यातीत्येवं सूत्रकृदब्रवीत् ॥ ५८ ॥
पञ्चीकृतास्तु भूतांशाः स्थूलदेहस्य हेतवः ॥
अल्पत्वेनापि सूक्ष्मास्तैर्लिङ्गं तिष्ठति वेष्टितम् ॥ ५९ ॥

त्वेनादत्ते *सुवर्णकार इति ॥ पेशस्कारी पेशसो मात्रामित्य-नयोर्व्याख्या—सुवर्णकारः स्वर्णांशमिति ॥ ५६ ॥ क्रियमाणदेह-स्य नवत्वेऽपि कथं नवतरत्वं कल्याणतरत्वं चेत्याशङ्क्य दृष्टान्तेनोपपादयति *पूर्वेति ॥ यथाशब्दपर्यायो वा शब्दः ॥ ५७ ॥ मालिन्ये नष्टेऽपि स्वर्णांशस्य सत्त्वान्नूतनभूषणकरणमुप-पद्यते । प्रकृते त्वेतद्देहारम्भकभूतांशानां नाशात्कथमेतेषां दे-हान्तरारम्भकत्वमित्याशङ्क्य हेत्वसिद्धिमाह *देहेति । उक्तार्थे तदन्तरप्रतिपत्ताविति सूत्रं प्रमाणयति *एवमिति ॥ ५८ ॥ नन्व-पञ्चीकृतानि लिङ्गं परिवेष्ट्य गच्छन्ति पञ्चीकृतानि वा ? नाद्यः तेषां स्थूलदेहानारम्भकत्वात्, नान्त्यः पुनरनुपलब्धिप्रसङ्गादित्याह *पञ्चीकृता इति ॥ तुरवधारणे ॥ ५९ ॥ एतद्देहस्यापि लिङ्ग-

देहादयः स्वस्वरूपा येनानात्मकमात्मकाः ॥ ६६ ॥
अधिष्ठानमजा सर्पदण्डाद्याः स्युः स्वकल्पिताः ॥
क्षणमात्रे तु सर्पाद्या निःस्वरूपाः खपुष्पवत् ॥ ६७ ॥
यः संसारी पुरा प्रोक्तः स एवायं स्वतः स्फुरन् ॥
साक्षिचैतन्यरूपत्वादधिष्ठानमनात्मनः ॥ ६८ ॥
अव्यावृत्तानुगतं वस्तु ब्रह्मगिरोच्यते ॥
ब्रह्मात्मनोस्तु तादात्म्यं सामानाधिकरण्यतः ॥ ६९ ॥
प्रत्यक्त्वं ब्रह्मणस्तत्त्वं ब्रह्मत्वं चात्मनस्तथा ॥
पारोक्ष्यद्वैतहानेन ह्यात्मा ब्रह्मेति बोध्यते ॥ ७० ॥
इति प्रोक्तं वस्तुतत्त्वं तत्रारोपः प्रपञ्च्यते ॥
उक्ततत्त्वापरिज्ञानाद् बुद्ध्युपाधिः प्रजायते ॥ ७१ ॥
तेनोपहित आत्माऽयं विज्ञानोऽस्मीति भावनात् ॥
विज्ञानमयतामेति स्रक्सर्पमयतामिव ॥ ७२ ॥
विज्ञानं ज्ञातृतोपाधिर्मनः संकल्पसाधनम् ॥

*देहेति ॥ देहद्वयकल्पनाधिष्ठानं तत्पदाभिधेयस्त्वात्मशब्दितोऽयमि-त्यर्थः ॥ ६६ ॥ कल्पितस्याधिष्ठानस्वरूपेणैव स्वरूपत्वमन्व-यव्यतिरेकाभ्यां साधयति *अधिष्ठानेति ॥ ६७ ॥ स वा अयमात्मेति पदचतुष्टयार्थं निगमयति *य इति ॥ ६८ ॥ ब्र-ह्मशब्दार्थमाह *अव्यावृत्तेति ॥ ६९ ॥ कथं तयोस्तादात्म्यं पारोक्ष्यसद्वयत्वाभ्यां विरोधात्तत्राह *प्रत्यक्त्वमिति । विरुद्ध-भागत्यागादैक्यं सोऽयमित्यत्र प्रसिद्धमिति हिशब्दार्थः ॥ ७० ॥ इत्थमनूद्यानन्तरवाक्यमादत्ते *इतीति ॥ तत्रात्मनो विज्ञानमयत्व-मुपपादयति *उक्तेत्यादिना ॥७१॥७२॥ विज्ञानमयो मनोमय इत्यनयोः पौनरुक्त्यमाशङ्क्य विज्ञानमनसोरर्थभेदमाह *विज्ञान-

क्रियोपाधिर्भवेत्प्राणस्तेऽन्तर्बहिरवस्थिताः ॥ ७३ ॥
ज्ञातृत्वभ्रान्तिराद्यो स्यात्ततः संकल्पविभ्रमः ॥
संकल्पितेऽर्थे कर्तृत्वमित्यन्तर्बाह्यनाश्रमः ॥ ७४ ॥
भवेत्प्राणमयादन्तर्मनोमय इति श्रुतिः ॥
तस्मादप्यान्तरस्तद्वद्विज्ञानमय ईरितः ॥ ७५ ॥
क्रमाद्बुद्धिमनःप्राणैर्ज्ञातृत्वादिसमुत्थितेः ॥
विकारार्थे मयट् प्रोक्तः प्राचुर्यार्थेऽथवा भवेत् ॥७६॥
विज्ञानाद्यनुसारेण चिदात्मा ज्ञातृतादिमान् ॥
प्राचुर्यमेतन्न त्वात्मा विकारः कस्यचित्क्वचित् ॥७७॥
चक्षुर्मयः श्रोत्रमयो द्रष्टा श्रोतेति विभ्रमात् ॥

मिति ॥ प्राणमय इत्यत्र प्राणशब्दार्थमाह *क्रियेति । विज्ञानमय इति प्रथमं ज्ञातृत्वाध्यासोक्तौ नियामकमाह *अन्त इति ॥ ७३ ॥ तेषामन्तर्बहिर्भावेऽनुभवं प्रमाणयति *ज्ञातृत्वेति ॥ अज्ञाते संकल्पायोगाद् बुद्धिपूर्वकक्रियायाः संकल्पपूर्वकत्वाच्चेति भावः ॥७४॥ तत्र तैत्तिरीयकश्रुतिमपि प्रमाणयति *भवेदिति ॥ ७५ ॥ विज्ञानमय इत्यादौ मयट्शब्दस्य हेतूक्तिपूर्वकं विकारार्थत्वमाह क्रमादिति । ज्ञातृत्वाध्यासस्य बुद्ध्यादिविकारत्वात्तद्विशिष्ट आत्मापि तद्विकार इत्युपचर्यत इत्यर्थः ॥ मयटः प्राचुर्यार्थत्वेऽपि न दोष इत्याह *प्राचुर्येति ॥ ७६ ॥ तदुपपादयति *विज्ञानेति ॥ ज्ञातृत्वाद्यध्यासस्य बुद्ध्यादिप्राचुर्यादात्मनस्तत्प्राचुर्यमित्यर्थः ॥ मयटो मुख्यविकारार्थत्वमाशङ्क्य निर्विकारत्वश्रुतिविरोधान्नैवमित्याह *नास्त्येति ॥ ७७ ॥ आत्मनश्चक्षुःश्रोत्रमयत्वमुपपादयति *चक्षुरिति ॥ चक्षुरादिसम्बन्धोऽनुक्तोऽप्य-

एतावता लिङ्गदेहतादात्म्यारोप ईरितः ॥ ७८ ॥

श्रुतिः—पृथिवीमय आपोमयो वायुमय आकाशमय-स्तेजोमयोऽतेजोमयः ॥

वा०—स्थूलदेहारोपयुक्तः पृथिव्यादिमयोक्तितः ॥
काठिन्याद्या भूमधर्मा दृश्यन्ते स्थूलदेहके ॥ ७९ ॥
अहं मनुष्य इत्येवं स्थूलदेहे भ्रमः स्फुटः ॥
वर्णाश्रमवयोऽवस्थाध्यासश्चास्मिन्नतिस्फुटः ॥ ८० ॥
अतेज इतिशब्देन मूलाज्ञानं विवक्षितम् ॥
अहमज्ञ इति स्पष्टमज्ञानाध्यास ईक्ष्यते ॥ ८१ ॥

श्रुतिः—काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयो ऽधर्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति यथा कारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन ॥

वा—कामं क्रोधं तथा ऽधर्मं तद्विरुद्धं च मोहतः ॥
सम्भावयन्प्रतीच्यात्मा तन्मयत्वं निगच्छति ॥८२॥

योपलक्षणमित्याह *एतावतेति ॥ ७८ ॥ पृथिवीमय इत्यादेस्तात्पर्यमाह *स्थूलदेहेति ॥ आत्मनः पञ्चभूतमयत्वमाह *काठिन्येति ॥७९॥ अहं विप्रोऽहं पतिरहं युवेत्यादिदेहाकारेण परिणतभूतधर्माणां वर्णाश्रमादीनां आत्मन्यध्यासाच्च तस्य पृथिव्यादिमयत्वोपपत्तिरित्याह *वर्णेति ॥ ८० ॥ तेजोमय इत्यन्तं व्याख्याय अतेजोमय इत्यत्र अतेजःशब्दार्थमाह *अतेज इति ॥ आत्मनस्तन्मयत्वं तदध्यासाभिनयेन दर्शयति *अहमिति ॥ ८१ ॥ काममय इत्यादि व्याचष्टे *काममिति ॥ अहं सकामो निष्कामः

इत्येवमादयोऽन्येऽपि ज्ञेयाः स्युः सर्वनामकाः ॥
ते सर्वनामशब्देन संकेताद्यनुकीर्तिताः ॥ ८३ ॥
तत्रादित्यादिना सर्वशब्दस्यार्थः प्रकीर्त्यते ॥
प्रत्यक्षवस्तुव्याख्याने तदिदंमयता भवेत् ॥ ८४ ॥
परोक्षवस्तुव्याख्यानाददोमय इतीर्यते ॥
आरोपोक्तिसमाख्यर्थमितिशब्दः प्रयुज्यते ॥ ८५ ॥
इदंमयत्वं विस्पष्टमैहिकत्वादपेक्ष्यते ॥
अदोमयत्वं व्याचष्टे यथाकारीतिवाक्यतः ॥ ८६ ॥
यथा करोतीह लोके परत्रापि यथा तथा ॥
परलोके भवत्येव कर्माचारप्रबोधिनः ॥ ८७ ॥
करणं नित्यकर्म स्यात्काम्यं तु चरणं भवेत् ॥
करणं कर्मशक्तिर्वा चरणं प्रत्ययात्मकम् ॥ ८८ ॥
पुण्यकारी भवेत्साधुः पितृदेवद्विजन्मभाक् ॥

---

सङ्कोचोऽकोचः पुण्यवानपुण्योऽस्मीत्यध्यात्मादात्मा तदन्मय इत्य-
र्थः ॥ ८२ ॥ सर्वमय इत्यस्य तात्पर्यमाह *इतीति ॥ ८३ ॥ सर्व-
शब्दस्य व्याख्या तद्यदेतादिति पदत्रयमित्याह *तत्रादीति ॥
प्रत्यक्षादिप्रमाणागम्यं वस्तु सर्वशब्दार्थमिति भावः ॥ इदंमयो
ऽदोमय इत्यनयोरर्थमाह *प्रत्यक्षेति ॥ अहं सुखीत्यादि प्रत्य-
क्षाध्यासः, धार्मिकोऽहमित्यादि परोक्षाध्यास इत्यर्थः ॥ ८४ ॥
इतीत्यस्यार्थमाह *आरोपेति ॥८५॥ यथेत्याद्यवतारयति *इद-
मिति ॥ ८६ ॥ अक्षराणि योजयति *यथेति ॥ ८७ ॥ कर्मा-
चारयोर्भेदं व्यनक्ति *करणमिति । सर्वकरणव्यापारशक्तिः कर-
णं, करोतेस्तदर्थत्वात् । सर्वप्रकारज्ञानयोग्यता चरणम्, चरतेर्ग-
त्यर्थत्वात् इत्यर्थान्तरमाह *करणमिति ॥ ८८ ॥ साधुकारीत्यादि

यथाकारी यथाचारी तथात्मा [illegible] ॥ ८८ ॥
ताच्छील्यप्रत्ययात्कर्माभ्यास एव फलप्रदः ।
इति चेन्न सकृत्कर्म कृत्वाऽपि फलमाप्नुयात् ॥ ९० ॥
पुण्य इत्यादिवाक्येन तदेतदभिधीयते ।
कर्मवाक्यस्य तात्पर्यमित्थं सम्यक् प्रपञ्चितम् ॥ ९१ ॥
सकृत्कृतौ फलप्राप्तिर्यदाऽभ्यासस्तदा वृथा ।
इति चेत्फलभूयस्त्वसिद्धयेऽभ्यास इष्यताम् ॥ ९२ ॥
वासना कर्म विद्या च त्रयं जन्मप्रयोजकम् ।
उक्तं, तत्र प्रधानत्वं कर्मणः श्रूयते पुनः ॥ ९३ ॥
उत्तमाधमदेहादिवैषम्यं कर्मणा भवेत् ।
देहे विद्यावासनाभ्यां भवेद्भोगस्य कौशलम् ॥ ९४ ॥
कर्मसाध्येव कर्तव्यमिच्छताऽभ्युदयं चिरम् ।

व्याचष्टे *पुण्येति ॥८९॥ पुण्यः पुण्येनेत्यादिवाक्यार्थे शङ्कामाह *ताच्छील्येति। यथाकारीत्यादौ ताच्छील्यप्रत्ययोपादानादभ्यस्तकर्मण एव फलहेतुत्वं न सकृत्कृतस्येत्यर्थः ॥ उत्तरवाक्याभिमतं परिहारमाह *नेति॥९०॥ उक्तमर्थं श्रुत्याऽऽरूढं करोति *पुण्य इति ॥ यथाकारीत्यादिवाक्यार्थं निगमयति *कर्मेति ॥९१॥ सकृत्कृतस्य कर्मणः फलहेतुत्वमुक्त्वाऽभ्यासस्य समाधत्ते *सकृदिति ॥ ९२ ॥ तं विद्याकर्मणी समन्वारभेते इत्यत्रैव कर्मणो जन्महेतुत्वोक्तेः पुनः कथनं व्यर्थं तत्राह *वासनेति ॥ यद्यपि वासनादित्रयं जन्महेतुरुक्तं तथापि तत्र कर्मणः प्राधान्यं वक्तुं पुनः कथनमित्यर्थः ॥९३॥ तत्प्राधान्यमुपपादयति *उत्तमेति । किं तर्हि इतरयोः फलं तत्राह *देह इति ॥ ९४ ॥ कर्मणः प्राधान्योक्तेस्तात्पर्यमाह

पापं तु वर्जितं हेयं दुःखेष्वनुस्यूतता स्फुटम् ॥ ९५ ॥
पूर्वकाण्डगता इत्थं कर्मप्राधान्यमूचिरे ॥
अथ वेदान्तवाक्यज्ञाः प्राहुः कामप्रधानताम् ॥ ९६ ॥

श्रुतिः—अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते तदभिसम्पद्यते ॥ ४ ॥

वा०—पुमानादौ काममय एव भूत्वाऽथ कर्मकृत् ॥
यतोऽयं कर्मणो हेतुः कामोऽतोऽस्य प्रधानता ॥ ९७ ॥
अकामस्य क्रिया काचिद् दृश्यते नेह कस्यचित् ॥
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ ९८ ॥
इत्येतद्विशदीकर्तुं स यथेत्युत्तरा श्रुतिः ॥
कामः क्रतुः कर्म जन्मेत्येषामेष क्रमो भवेत् ॥ ९९ ॥
पुंसो या विषयापेक्षा स काम इति भण्यते ॥
स एव वर्धमानः सन् क्रतुत्वं प्रतिपद्यते ॥ १०० ॥
रुचेरतिशयः काम्ये विषये क्रतुरीर्यते ॥
पाक्षिकं कर्म कामे स्यात्करोत्येव क्रतौ सति ॥ १०१ ॥
पुण्यपापात्मकं कर्म त्वपूर्वादृष्टशब्दितम् ॥

---

*कर्मेति ॥ ९५ ॥ इत्यनूद्यार्थं स्वाभिमतपक्षमाह *पूर्वेति ॥ ९६ ॥ काममय एवेत्यादि व्याकुर्वन्कामप्राधान्यमाह *पुमानिति ॥ ९७ ॥ कामस्य प्रधानत्वे मनुवचनमाह *अकामस्येति ॥ ९८ ॥ स यथेत्यादेः *इत्येति । वक्ष्यमाणप्रकारेण एतत्कामप्राधान्यं वाक्यतात्पर्यमाह *काम इति ॥ ९९ ॥ कामक्रतुकर्मजन्मानि क्रमेण भवन्तीत्युक्तं तत्र कामक्रत्वोर्भेदमाशङ्क्याह *पुंस इति ॥ १०० ॥ वर्धमान इत्युक्तं व्यनक्ति *रुचेरिति । क्रतावपि तयोर्भेदमाह

उत्तमाधमजन्मास्य फलं प्रोक्तं पुराऽपि च ॥ १०१ ॥
लोकेऽपि यादृशः कामस्तादृक्प्रयत्नस्तथा ॥ १०२
कर्म कृत्वा फलं गच्छेत्तच्छुभाशुभयोः समम् ॥१०३॥

श्रुतिः—तदेष श्लोको भवति

तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य ।
प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् ॥
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति नु-
कामयमानः ॥

वा०—कामप्राधान्यदार्ढ्यार्थे मन्त्रस्योदाहृतिः श्रुतौ ॥
लिङ्ग्यते गम्यते सर्वं मनसाऽतोऽस्य लिङ्गता ॥१०४॥
तन्मनो नितरां सक्तमुत्तमे वाऽधमे फले ॥
सक्तः सन्कर्मणा सार्धं तदेव फलमाप्नुयात् ॥१०५॥
इह जन्मनि यत्किंचित्कर्म कुर्याच्छुभाशुभम् ॥
तदीयफलसंपूर्त्तिः स्वर्गे वाऽन्यत्र वाऽऽप्नुयात्॥१०६॥

---

*शाक्षिकमिति ॥ १०१ ॥ कर्मशब्दार्थमाह *पुण्येति ॥ १०२ ॥ पदार्थमुक्त्वा स यथेत्यारभ्य तदभिसंपद्यते इत्यन्तं वाक्यं योजयति *लोक इति ॥ १०३ ॥ तदेष इत्यादेस्तात्पर्यमाह *कामेति ॥

तत् तत्र उक्तेऽर्थे एष वक्ष्यमाणश्लोको भवतीति श्रुत्यर्थः ॥

लिङ्गशब्दव्युत्पादनपूर्वकं मन्त्रस्य पूर्वार्धं व्याचष्टे *लिङ्ग्यत इत्यादिना ॥ १०४ ॥ १०५ ॥

अस्यात्मनः सर्वधीसाधनं मनः यत्र फले निषक्तं नितरां सक्तमुद्भूताभिलाषं तत्र तदुपहिते आत्मापि सक्तः सन् यत्कर्म करोति तेन कर्मणा सह परलोकं प्राप्य तदेव फलमाप्नोतीत्यर्थः ॥ उत्तरभागं व्याचष्टे *इहेति ॥ १०६ ॥

अप्राप्तौ काम्यमानस्य कामः क्वापि न विनश्येत् ॥१३५
मिष्टान्नभोजनं भुक्त्वा बुभुक्षा न निवर्तते ॥
अतः काम्यप्राप्तिरेव निष्कामत्वस्य कारणम् ॥१३६॥
ननु दोषस्य दृष्ट्याऽपि भवेत्कामविनिर्गमः ॥
यथाभिरोग्यादितं भोज्यं पश्यन्भोक्तुं न वाञ्छति ॥१३७
नैवं, फले साधने च पुंसः कामो द्विधा भवेत् ॥
तत्र साधनदोषेण फलकामो न नश्यति ॥ १३८ ॥
अन्यथा भोज्यदोषेण क्षुन्निवृत्तिः प्रसज्यते ॥
न चैवमस्त्यन्यभोज्यं सम्पाद्यापि बुभुक्षते ॥ १३९ ॥
फलं सर्वत्र चानन्दो नत्वसौ क्वापि दुष्यति ॥
तस्मादानन्दकामोऽयमानन्दाप्त्यैव नश्यति ॥१४०॥
एवं सत्याप्तकामत्वं निष्कामत्वस्य साधनम् ॥
काम्याप्तौ ह्यात्मकामत्वमेव हेतुर्न चेतरत् ॥ १४१ ॥
सत्यामप्यात्मवाञ्छायां योगमायादिना विना ॥

तं व्यतिरेकेणाह*अप्राप्ताविति ॥ १३५ ॥ उक्तं निगमयति*अत इति ॥ १३६ ॥ काम्यप्राप्तिरेवेत्यवधारणमनुपपन्नमिति शंकते*नन्विति ॥ तत्रानुभवं प्रमाणयति*दृग्भिरिति ॥ १३७ ॥ कामनाभेदं दर्शयन् तत्र फलकामनानिवृत्तेरात्मप्राप्त्येकसाध्यत्वादवधारणानुपपत्तिरिति परिहरति*नैवमिति ॥१३८॥ प्रसंजनमिष्टमेवेत्याशंक्यानुभवविरोधान्मैवमित्याह*नहीति ॥१३९। *फलकामेति ॥ फलस्य स्वतो निर्दुष्टत्वादिति भावः ॥ १४० ॥ आत्मप्राप्तिं विना तत्कामनाऽनिवृत्तौ फलितमाह*एवमिति ॥ सर्वकामावाप्त्यात्मकामत्वं हेतूकरोति*काम्येति ॥ १४१ ॥ नन्वात्मकामत्वमेव काम्याप्तौ हेतुरित्यवधारणमनुपपन्नम्, यागादेरपि काम्यसम्पाद-

स्वर्गपुत्रादिकाम्याप्तिरिति चेद्दृश्यतामिदम् ॥१४२॥
किमेकं साधनं सर्वकामानां प्रापकं भवेत् ॥
उतैकस्यैव साध्योऽत्र मुख्यत्वं तद्विवक्षया ॥ १४३ ॥
द्वितीये सर्वकामाप्तेरात्मवाञ्छैव कारणम् ॥
सर्वाणि साधनान्येको न संपादयितुं क्षमः ॥ १४४ ॥
यदुक्तमात्मवाञ्छाऽपि न पुत्राद्याप्तिसाधनम् ॥
इत्यत्र कोऽयमात्मा स्यात्सोपाधिर्वाऽनुपाधिकः १४५
सोपाधिकात्माऽऽभासः स्यान्न तु मुख्यः श्रुतीरितः ॥
निरुपाधिः परानन्द आत्मेति श्रुतिसंमतः ॥ १४६ ॥
आनन्दाः सर्वभूतानां तस्मिन्नन्तर्भवन्ति हि ॥
पुत्रादिजन्या आनन्दा अपि तस्मिन्व्यवस्थिताः ॥१४७॥
तथाविधात्मकामो य आप्तकामो भवेदयम् ॥

---

सिद्धेतुत्वात्, यागाद्यभावे आत्मेच्छामात्रेण स्वर्गाद्याप्त्यदृष्टेश्चेति शंक-
ते*स्वर्गेति ॥ १४२ ॥ अत्रात्मेच्छायाः सर्वकाम्यप्राप्तिहेतुत्वं
विवक्षितम्, आत्मप्राप्तिश्च न साधनान्तरसाध्येत्यभिप्रेत्य साधनांतरं
विकल्पयति*किमिति । आद्यमनुभवविरोधेन प्रत्याह*नेति ॥
१४३ ॥ द्वितीयेऽस्मदिष्टसिद्धिरित्याह*द्वितीय इति ॥ नन्वेवमप्य
यथारव्यानुपपत्तिरात्मेच्छां विनाऽपि सर्वकाम्यस्य तत्तत्साधनसाध्य-
त्वसंभवादित्याह*सर्वाणीति ॥१४४॥ पूर्वपक्षोक्तदूषणं परिहर्तुमनु-
वदति*यदिति ॥ आत्मेच्छायाः सर्वानंदप्राप्तिहेतुत्वं वक्तुं विमर्शपूर्व-
कमात्मस्वरूपं निर्धारयति*अत्र कोऽयमित्यादिना ॥१४५॥१४६॥
तथापि प्रकृते किमायातं तत्राह*आनन्दा इति । एतस्यैवानंदस्ये-
त्यादिश्रुतिप्रसिद्धिद्योतको हिशब्दः ॥ १४७ ॥ निरतिशयानंदा-
त्मकात्मेच्छायास्तत्प्राप्तिहेतुत्वं तस्मात्तस्य कामावाप्तिहेतुत्वमुक्त-

नात्मनः प्राप्तरूपत्वात्कोऽन्यः कामोऽत्र विद्यते ॥१४८॥
प्राप्तत्वादेव कामोऽपि नात्मनीति मतं यदि ॥
नैवमप्राप्तवत्सोऽयमनभिज्ञेन काम्यते ॥ १४९ ॥
कण्ठचामीकरं प्राप्तमप्यज्ञातं तु काम्यते ॥
प्राप्तोऽप्यात्माऽनभिज्ञेन काम्यतां हीयतेऽत्र किम् १५०
यद्यत्यंतमविज्ञातो न काम्यस्तर्हि चात्मनः ॥
सामान्यतोऽवबुद्धः सन्काम्यतामनुभूतये ॥ १५१ ॥
स कामः क्रतुमुत्पाद्य कारयेच्छ्रवणादिकम् ॥
फलं त्वनुभवस्तत्र कामात्स्वर्गो यथा तथा ॥१५२॥
य ईदृगात्मकामोऽयं प्राप्तकामो भवेत्ततः ॥
निष्कामत्वादकामः सन्संसारात्प्रविमुच्यते ॥१५३॥
संसारानर्थबीजस्य प्रध्वंसादात्मबोधतः ॥
कामकाम्याद्यसद्भावात्पूर्ण आत्माऽवतिष्ठते ॥ १५४॥

मुपसंहरति *तथेति ॥१४८॥ आत्मनो नित्याप्तत्वे कथं तत्कामना ? अप्राप्तविषयविषयत्वात्कामस्येति शंकते *प्राप्तत्वादिति ॥ प्राप्तेऽपि कामो न विरुध्यत इति समाधत्ते *नैवमिति ॥१४९॥ तदेव दृष्टान्तेनाह *कंठेति ॥ आत्मनोऽज्ञातत्वे सुतरां तत्र कामना नेति शंकते *यदीति । अत्यंताज्ञानित्वादसंभवेऽप्यापातज्ञानिनः सा संभवतीति परिहरति *तर्हीति ॥ १५१ ॥ उत्पन्नस्यापि कामस्य कथमनुभवहेतुत्वम्, अनुभवस्य प्रमाणजन्यत्वादित्याशंक्य परंपरया तस्य हेतुत्वमाह *स इति ॥१५२॥ योऽकाम इत्यादिवाक्यार्थं हेतुहेतुमद्भावेनोक्तमुपसंहरति *य इति ॥ १५३ ॥ कोऽयं संसारमोक्ष इत्यत आह *संसारेति ॥ ज्ञानादज्ञानतज्जध्वंसे पूर्णतादात्म्यभावा-त्पूर्णरूपेणावस्थानं मुक्तिरित्यर्थः ॥ १५४ ॥ योऽकाम इत्या-

ज्ञानाभिव्यक्तिरित्येवं तद्व्यक्तं न युज्यते ॥ १७० ॥
चिदात्मनो च आनन्दः स्वरूपं चेत्तदा स्वतः ॥
व्यक्त एव पुनस्तस्याभिव्यक्तिः कीदृशी भवेत् ॥ १७१ ॥
अस्वरूपत्वपक्षे तु जन्यानंदो विनश्यति ॥
तस्मादात्माऽऽनन्द एव सर्वदा भासते स्वयम् ॥ १७२ ॥
नन्विदानीं यथा तद्वन्मुक्तौ चेदविशेषतः ॥
नाभिपत्तो भवेन्नृणां शास्त्रवैयर्थ्यमेव च ॥ १७३ ॥
नैवमात्मन्यविद्याया हानिः कार्या यतस्ततः ॥
तदर्थं यत्नसाफल्यं शास्त्रारंभोऽपि चार्थवान् ॥ १७४ ॥
मुक्तामुक्तस्वरूपोऽयं न विशेषोऽस्ति वस्तुनि ॥

---

धीसुखयोरभिव्यक्तिर्मुक्तिः सामुक्त्यजन्येति केचित्, तन्मतमनूद्य निराह *ये इत्यादि ॥ १७० ॥ कथमयोगमित्याशङ्क्य किं ज्ञानानन्दयोरात्मस्वरूपत्वम् उत तद्भिन्नत्वम्। तत्राद्यं निरस्यति *चिदिति ॥ १७१ ॥ चरमेऽपि अभिव्यक्तं सुखं नित्यमनित्यं वा ? अन्त्यं प्रत्याह *अस्वरूपेति ॥ आद्ये आत्मातिरिक्तनित्यवस्त्वभ्युपगमेऽद्वैतश्रुतिबाधप्रसङ्गादस्मन्मतमेव परिशिष्यत इत्याह *तस्मादिति ॥ १७२ ॥ आत्मस्वरूपत्वेन मुक्तिरित्युक्तमयुक्तमित्याशङ्कते *नन्विति। लौकिकं यथाप्रतीत्य शास्त्रीयः यथादिः आवेद्यः। शास्त्रं मोक्षविषयम् ॥ १७३ ॥ शास्त्रीयमोक्षस्य निर्विशेषत्वेऽपि स्वाविद्याकल्पितध्वंसित्वेन शास्त्रादिकमर्थवदिति परिहरति *नैवमिति ॥ यथाहुः "अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य" इति ॥ १७४ ॥ अथामुक्तस्यात्मनो मुक्तिविशेषाभावे शास्त्रतो मुक्तौ किं न स्यात्तत्राह *मुक्तेति । वस्तुनो विशेषाभावे

तद्विद्यैव निःशेषविशेषाणां प्रसूतिकृत् ॥ १७५ ॥
अशेषानर्थहेतुं तामविद्यां ब्रह्मजा मतिः ॥
सर्वथा हन्ति तेन स्यात्साफल्यं शास्त्रज्ञानयोः ॥ १७६ ॥
अविद्याध्वस्तिमापेक्ष्य सम्यग्धीजन्ममात्रतः ॥
आत्मा ब्रह्मैव सन्साक्षाद्ब्रह्माप्येतीति सुस्थितम् ॥ १७७ ॥
इति वेदान्तसिद्धान्तसर्वस्वं ब्राह्मणोदितम् ॥
अस्यैवार्थस्य दार्ढ्यार्थं मन्त्रोदाहरणं भवेत् ॥ १७८ ॥

श्रुतिः—तदेष श्लोको भवति ॥
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥

वा०—कामिनः सर्वसंसारः पुरा मन्त्रेण वर्णितः ॥
अकामस्य विमोक्षोऽत्र तथा मन्त्रेण वर्ण्यते ॥ १७९ ॥
पुंसो हृदि श्रिताः कामा मुच्यन्ते निखिला यदा ॥
तदानीममृतो भूत्वा ब्रह्मात्रैव समश्नुते ॥ १८० ॥
सुषुप्तौ कामनाशेऽपि शिष्यते कामवासना ॥
तज्जन्मा मृतिरिति प्राह मुक्तौ सर्वविशेषणम् ॥ १८१ ॥
कामास्तु मनसो धर्मा नात्मनीति विचक्षणाः ॥

---

हेतुमाह *तद्विद्येति ॥ १७५ ॥ शास्त्रज्ञयोरर्थवत्त्वं निगमयति *अशेषेति ॥ १७६ ॥ एवं सति ब्रह्मैव सन्नित्यादिवाक्यं निरवद्यमित्याह *अविद्येति ॥ १७७ ॥ ब्राह्मणार्थमनूद्य तदपीत्याद्युत्तरवाक्यमादत्ते *इतीति ॥ १७८ ॥ यदा सर्वे इत्यादिमन्त्रतात्पर्यमाह *कामिन इति ॥ वर्ण्यत इति शेषः ॥ १७९ ॥ मन्त्राक्षराणि व्याचष्टे *पुंस इति ॥ १८० ॥ यदा सर्वे इत्यत्र सर्वशब्दार्थमाह *सुषुप्ताविति ॥ १८१ ॥ हृदि श्रिता इति विशेषणतात्पर्यमाह

हृदि श्रिता इति प्राह श्रुतिरन्येत्वकल्पिताः ॥१८२॥
अविद्यायाः समुच्छित्तौ तद्धेतूनामशेषतः ॥
कामानामपि नाशः स्याद्ब्रह्मानिष्टरूपिणाम् ॥१८३॥
काम एव हि संसारहेतुत्वेन पुरा श्रुतः ॥
अतः कामस्य नाशेऽसावमृतो भवति ध्रुवम् ॥१८४॥
अस्मिन्नेव वपुष्येष योगाद्ब्रह्मत्वमश्नुते ॥
ब्रह्मणो मरणाभावादमृतत्वं व्यवस्थितम् ॥ १८५ ॥
मर्त्यप्रपञ्चस्याहात्र मन्त्रव्याख्यानमन्यथा ॥
हृन्निष्ठा आत्मनिष्ठाश्चेत्येवं कामा द्विधा मताः ॥१८६॥
हृदि श्रिताः प्रमुच्यन्ते न तु प्रज्ञात्मनि श्रिताः

*कामा इति ॥ १८२ ॥ कामानां हृदयाश्रयत्वेऽपि कथं विद्यया तन्निवृत्तिरनन्तया अविद्यामात्रनिवर्तकत्वादित्याह *अविद्याया इति ॥ १८३ ॥ अविद्याध्वस्तौ तत्कार्यान्तःकरणध्वस्तेः तदाश्रितकामानां सविषयाणां ध्वंसेऽपि कार्यान्तरं स्यादेवेति, तत्कुतो मुक्तिः, तत्राह *काम इति ॥ पुरा, काममय एवायं पुरुष इत्यादाविति शेषः ॥ कामहेतुकत्वाद्धर्माद्यविद्याध्वस्तौ कर्मापि नश्यति । तथा च प्रतिबन्धाभावात्कामनाशानन्तरमेव मुक्तिर्भवतीत्यर्थः ॥ १८४ ॥ अमृतो भवत्यत्र ब्रह्म समश्नुत इत्यनयोः पौनरुक्त्यं परिहरति *अस्मिन्निति ॥ १८५ ॥ निःशेषकामध्वस्तौ विदुषो मुक्तिरित्येवमर्थपरतया मन्त्रः स्वमते व्याख्यातः, इदानीमेकदेशिव्याख्यानं दूषयितुमनुभाषते *मर्त्यप्रपञ्च इति ॥ १८६ ॥ आत्मनिष्ठास्तदभिन्नाः कामाः सन्तीत्यत्र श्रुतिमाह *सत्येत्यादिना ॥

कामा आत्मनि [illegible] इति श्रुतिः ।
यदुक्तं तद्धृदस्थत्वं आत्मना न कदाचित् ॥२०५॥
बाह्येऽर्थे वासनाः सर्वाः सजातीये न तास्ततः ॥
निःसङ्गे भिन्नजातीये कुतः स्युः प्रत्यगात्मनि ॥२०६॥
आत्माश्रयत्वं कामानां न युक्त्या नापि शास्त्रतः ॥
अर्थप्रपञ्चव्याख्यानमपव्याख्यानमुपेक्ष्यताम् ॥ २०७ ॥
ननु ब्रह्मात्मतत्त्वेऽपि जीवतो मुक्तिरीरिता ॥
जीवंश्चेत्को विशेषोऽस्य बंधमुक्तावितीर्यताम् ॥२०८॥
श्रुतिः—तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते ॥
वा०—अभिमानः पूर्वमासीद्देहादावधुना तथा ॥
नास्तीत्यत्रापि विस्पष्टः सर्पदृष्टान्त उच्यते ॥ २०९ ॥
अहिनिर्ल्वयनी सर्पनिर्मोको जीववर्जितः ॥

---

दृढभूताः कामवासनाः संसारबीजभूता आत्मनि तिष्ठन्तीति तद्भ्रमं निराचष्टे *कामा इति ॥ २०५ ॥ अथ वासनानामप्यात्म-नो वासनाश्रयत्वमाशङ्क्य विरोधान्नैवमित्याह *बाह्येऽर्थ इति ॥ वासनाश्रययोग्य इत्यर्थः ॥ अस्तु तर्ह्यात्मनो बाह्यत्वं तत्राह *स-जातीयेति । कामाद्याश्रयेण हृदयेनात्मनोऽपि परिच्छिन्नत्वा-त्वं स्यादिति नेत्याह *निःसङ्ग इति ॥ २०६ ॥ परपक्षनिराक-रणमुपसंहरति *आत्मेति ॥ २०७ ॥ तथापि [illegible] प्रश्न-पूर्वकमाकाङ्क्षामुत्थापयति *नन्विति ॥ २०८ ॥ उत्त-रत्वेनोत्तरवाक्यमवतारयति *अभिमान इति ॥ २०९ ॥ तत्र श्रुत्यर्थं व्याचष्टे *अहिनिर्ल्वयनीति । [illegible]

स्वप्रकाशतया लोकशब्देनापि स उच्यते ॥ २३६ ॥
ब्रह्मस्वभावमानंदं नचिरो याति तादृशम् ॥ २३७ ॥
इत उक्तात्मसंयोगान्मोहोच्छेदानंतरम् ॥
स्वत एव यतो मुक्तो मुच्यतेऽनस्तमोहनुतौ ॥ २३८ ॥
मुक्तौ तमोऽतिरेकेण नांतरायोऽन्य इष्यते ॥
यतोऽसौ ज्ञानविध्वस्तौ मुक्तः सद्येव मुच्यते ॥ २३९ ॥
देहपातव्यपेक्षाऽतो न स्यादूर्ध्वश्रुतेरिह ॥
ज्ञानेनाज्ञाननाशाख्ये मोक्षेऽन्यत्किमपेक्ष्यते ॥ २४० ॥

---

रयेति । स्वर्गशब्दस्य क्रियाजन्यसुखविशेषवाचित्वात्स्वरूपसुखस्यापि तद्वाच्यत्वेऽनित्यत्वं स्यादत आह *योगेति ॥ ननु लोकशब्दाभिधानात्स्वर्गशब्देन यागादिफलभूतभोगभूमिरेव गृह्यतामिति नेत्याह *क्रियार्थेति । मोक्षप्रकरणपरामर्शार्थोऽतः शब्दः ॥ २३६ ॥ का तर्हि लोकशब्दस्य गतिस्तत्राह *स्वेति ॥ स इति नित्यानंदः परामृश्यते । पदद्वयस्यार्थमुपसंहरति *ब्रह्मेति । तादृशं प्रकाशात्मकम् ॥ २३७ ॥ इत इत्यादेरर्थमाह *इत इति ॥ ऊर्ध्वमित्यस्य व्याख्या मोहोच्छेदानंतरमिति ॥ २३८ ॥ वस्तुतो मुक्त एव सन् ज्ञानान्मुच्यत इत्युक्तमेवोपपादयति *मुक्ताविति ॥२३९॥ ननु न ज्ञानसमानकालीना मुक्तिः, किंतु देहपातानंतरमिति ऊर्ध्वश्रुत्या निर्णीयते तत्राह *देहेति ॥ यस्माद्ब्रह्मैव सन्नित्याद्यनन्यथासिद्धश्रुत्या मुक्तस्यैव ज्ञानान्मुक्तिरभिहिता, तस्मादूर्ध्वश्रुतिरस्मदुक्तरीत्या मोहोच्छेदानंतर्यपरेति भावः । मुक्तेर्देहपातानपेक्षत्वेऽपि ज्ञानातिरिक्तसाधनांतरापेक्षाभावं कथयति *ज्ञानेनेति ॥ न तु तमसः आलोकस्तमोनिवृत्तावन्यदपेक्षत इति

यल्लोकेनाग्येन या कथा मोक्षस्याभ्यन्तरम् ॥
उपन्यस्याथ सिद्धांतं प्राह श्लोकान्तरेण सः ॥२४१॥
मोक्षमार्गो यथोक्तोऽस्मिन्विषयोपप्लुताशयाः ॥
दर्शनानि विचित्राणि कल्पयंति यथारुचि ॥ २४२ ॥
श्रुतिः-तस्मिञ्छुक्लमुत नीलमाहुः पिंगलं हरितं लोहितं च ॥
वा०-शुक्लं प्रशांतिसंशुद्धमिति केचित्प्रचक्षते ॥
शारदे व्योमवन्नीलमित्याहुरपरे जनाः ॥ २४३ ॥
पिङ्गलं तत्परं ब्रह्म ज्वालेवेत्यपरे जगुः ॥
वैडूर्यवत्तु हरितं केचिदाहुर्विपश्चितः ॥ २४४ ॥
अपरे लोहितं प्राहुर्जपाकुसुमसन्निभम् ॥
नाडीरूपाणि वीक्ष्यात्मरूपाणीति भ्रमो ह्ययम् ॥२४५॥
एकमेवैकरूपं यत्तत्वं ज्ञानं निरंजनम् ॥

---

भावः ॥२४०॥ द्वितीयश्लोकमवतारयति *श्लोकेनेति ॥ उक्ता-नयार्थे द्वितीयश्लोकपूर्वार्द्धेन वादिविप्रतिपत्तिरुपन्यस्यानंतरमुत्त-रार्द्धेन सिद्धांतं मुनिराहेत्यर्थः ॥२४१॥ तत्र पूर्वार्द्धस्य तात्पर्यमाह *मोक्षेति ॥ विचित्रानेकरूपकल्पनाहेतुमाह *अविवेति । तत्रै-व हेत्वंतरमाह *यथेति ॥२४२ ॥ कल्प्यमानदर्शनान्येव दर्शयति *शुक्लमित्यादिना ॥ २४३ ॥ २४४॥ एवमनुभूयते चेद्ब्रह्म तर्हि नानारूपवद्दा अस्तु तत्राह *नाडीति ॥२४५॥ उक्तमर्थयतानां व-स्त्वनुसारित्वाशयमात्मतत्त्वमाह *एकमिति ॥ दाडिमादिवदेक-स्यैवानेकरसत्वं निराकर्तुं विशिनष्टि *एकरूपमिति ॥ तस्यैव मेयत्वमाह *ज्ञानमिति । वस्तुतस्तस्य ज्ञानादियोगोऽपि ——— *निरंजनमिति ॥ वस्त्वनुसारित्वाभावे भ्रमत्वात्

आत्मन्यज्ञानसूत्रस्थैव कोटिशः कल्प्यते मृषा॥२४६॥
अस्थूलं नेतिनेतीति सर्वमायादिनिह्नुतेः ॥
कुतोऽकारणकार्येऽस्मिन्मूढादेः सम्भवः परे ॥२४७॥
श्रुतिः—एष पन्था ब्रह्मणा ह्यनुवित्तस्तेनैति ब्रह्म-
वित्पुण्यकृत्तैजसश्च ॥ ९ ॥
वा०—यस्तु वेदोदितोपायक्षपिताशेषकल्मषः ॥
ब्रह्मणैवानुवित्तोऽयं तेन पन्था गुरूदितः ॥ २४८ ॥
विद्याधिकारी नैवान्यो ब्रह्मणस्तेन वर्णितः ॥
ब्रह्मशब्देन यद्वेत्थं भूतार्थं ब्रह्मणेतिगीः ॥ २४९ ॥
बोधमार्गो ब्रह्मरूपो ब्रह्मैकविषयत्वतः ॥
गुरूक्तिमनु सोऽप्यत्र लभ्यते नान्यथा क्वचित्॥२५०॥

---

भ्रमत्वं फलतीत्याह *आत्मनीति ॥ २४६ ॥ वस्त्वनुसारित्वाभा-वमुपपादयति *अस्थूलेति ॥२४७॥ कल्पितमोक्षमार्गाणां बाध्य-त्वं प्रदर्श्य एष पंथा इत्यादिसिद्धान्तं प्रथमपादस्यार्थमाह *य-स्त्विति ॥ वैदिकयज्ञादिनिरस्तसमस्तपापो यः शुद्धधीस्तेन ब्रह्मणा गुरूपदेशादनु अयं मोक्षमार्गो वित्तो लब्ध इत्यर्थः॥२४८॥ब्रह्मणा-ऽनुवित्त इत्यत्र मुमुक्षोर्जीवस्य कथं ब्रह्मशब्दवाच्यत्वं तत्राह *विद्येति ॥ जीवब्रह्मणोरभेदविवक्षया जीवे ब्रह्मशब्दःप्रयुक्त इत्यर्थः ॥ ब्रह्मणेत्यस्य पदस्यार्थान्तरमाह *यद्वेति ॥ २४९ ॥ ब्रह्मणेति-तृतीयायाः इत्थंभावार्थत्वे वाक्ययोजनाप्रकारमाह *बोधेति ॥ बोधात्मकमार्गस्यान्तःकरणवृत्तेः कथं ब्रह्मरूपत्वं तत्राह *ब्रह्मैके-ति ॥ अनुवित्त इत्यस्यार्थस्तु पूर्ववदेवेत्याह *गुरूक्तिमिति २५० एष इत्यादि व्याकरणाय तेनेत्यादि व्याचष्टे *आदाविति ॥

आदौ पुण्यकृद् भूत्वा पश्चात्तैजसः तदनंतरं ब्रह्मविद् भूत्वा

हित्वा भिन्नं प्रयुज्यन्ते यथेहापि तथाऽऽत्मनि ॥१२६॥

हित्वा भिन्नामिवाविद्यामाणमात्रुच्यते पुमान् १२७

धर्माधर्मौ रजो ज्ञेयौ रजोवत्तन्मलत्वतः ॥

तदकर्तृत्वतो ब्रह्म विरजोऽकरणत्वतः ॥ १२८ ॥

असम्यग्ज्ञातयाथात्म्यां जनिमत्प्रकृतित्वतः ॥

आत्मैवाकाशशब्देन श्रुत्येह प्रतिपाद्यते ॥ १२९ ॥

जनिमत्कारणादात्मा यो ऽस्थूलादिविशेषणः ॥

आकाशात्स परो ज्ञेयस्तस्यापूर्वादिरूपतः ॥ १३० ॥

यस्मादेवमतो ऽजोऽसावकार्यकरणत्वतः ॥

दर्शितमर्थमनूद्य दार्ष्टान्तिकमाह *अगृहीत्वेति ॥ १२६ ॥ दार्ष्टान्तिकं स्पष्टयति *शब्देति ॥ यथले गृहीतसंगतिकाः शब्दा लक्षणया निर्विशेषं वस्तु बोधयन्तीति पूर्वोक्तमनुसंधेयम् ॥१२७॥ श्लोकस्य पूर्वार्द्धं व्याख्यायोत्तरार्द्धं व्याख्यातुं विरजःशब्दार्थमाह *धर्मेति ॥ तयो रजस्त्वे हेतुः *रजोवदिति । ब्रह्मणो विरजस्त्वं सहेतुकमाह *तदकर्तृत्वत इति । ब्रह्मणो धर्माद्यकर्तृत्वे हेतुः—अकरणत्वत इति ॥१२८॥ आकाशशब्दं व्याकरोति *असम्यगिति ॥ जगत्कारणत्वेन प्रसिद्धोऽज्ञानोपहितस्वरूप आत्माऽस्मिन्मन्त्रे आकाश इति श्रुत्या प्रतिपाद्यते इत्यर्थः ॥ १२९ ॥ परशब्दार्थमाह *जनिम-दिति. ॥ जगत्कारणादाकाशादव्याकृतादिति यावत् ॥ अस्थू-लादिविशेषणस्यात्मनोऽन्यत्वे हेतुमाह *तस्येति ॥ १३० ॥ अजर इत्यस्यार्थमाह *यस्मादिति ॥ उपजीव्यतयो स्पष्टयति *अकार्येति ॥ अजविशेषणस्यार्थमाह

नहि मिथ्याधियोऽभ्यासात्सम्यग्ज्ञानसमुद्भवः ॥ ३४७ ॥
तथा सम्यक्प्रयत्नेन मुक्तिः स्यात्सर्वदेहिनाम् ।
संसारमिथ्याविज्ञानमभ्यस्यन्त्येव सर्वदा ॥ ३४८ ॥
न च वाक्यस्य पारोक्ष्यबोधित्वनियमो यतः ।
दशमस्त्वमसीत्यादावापरोक्ष्येण बुध्यते ॥ ३४९ ॥
विज्ञायेत्यादिवाक्यस्य व्याख्यानं यदपेक्षसे ।
मानान्तराविरोधेन व्याकुर्मो बहुधा शृणु ॥ ३५० ॥
वाक्यमाहात्म्यसंभूतं यद्विज्ञानमुदीर्यते ।
मेयमाहात्म्यसम्भूता प्रज्ञेतीह विवक्षिता ॥ ३५१ ॥
स्वर्गादौ शब्दसामर्थ्याद् बुद्धेः स्याद्विषयाकृतिः ।
घटादौ मेयसान्निध्याद्विषयाकारता धियः ॥ ३५२ ॥

---

रेकेण दूषयति *नहीति ॥ ३४७ ॥ विपक्षे दोषमाह *तथेति ॥ अतस्तत्त्वमादिवाक्यादखण्डार्थधीरेवोदेतीति न तदर्थमभ्यासविधानमिति भावः ॥ ३४८ ॥ यदुक्तं स्वभावतः शब्दस्य परोक्षार्थबोधित्वादपरोक्षसाक्षात्काराय तदभ्यासविधानमिति तदपि मन्याह *नचेति ॥ ३४९ ॥ कथं तर्हि वाक्यं व्याख्येयमित्याशंक्य तस्यानेकार्थान्वक्तुं प्रतिजानीते *विज्ञायेति ॥ ३५० ॥ मानान्तराविरुद्धं व्याख्यानमनुवर्णयन् पदद्वयार्थमाह *वाक्येति ॥ ३५१ ॥ किं तद्वाक्यमेयमाहात्म्यजन्यत्वं तदाह *स्वर्गादाविति । व्यवहिते विषये शब्दजन्यधियस्तदाकारत्वं शब्दमाहात्म्यमुक्तं, विषयासत्त्वेऽपि शब्दात्तदाकारज्ञानोत्पत्तिसिद्धेः । तत्र ज्ञानस्य तदाकारत्वं च तद्व्यवहारजननयोग्यतामात्रमेव । अव्यवहिते तु विषये ज्ञानस्य तदाकारत्वं तत्तादात्म्यापत्तिः । तत्तादात्म्यं च विषयं विना न संभवतीति विषयमाहात्म्यमुक्तं तदिति भावः ॥ ३५२ ॥

परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ १६६ ॥
मनोवाचोर्ग्लानिरेव शब्दोच्चारणचिन्तयोः ॥
हिंसैव तस्मात्सिद्ध्यर्थो मौनादिः स्मर्यते ततः ॥१६७॥
मौनं योगासनं योगस्तितिक्षैकान्तशीलता ॥
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः ॥ १६८ ॥
ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ॥
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् १६९
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ॥
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७० ॥
इतिशब्दः समाप्त्यर्थः श्लोकास्तेन समापिताः ॥
तत्त्वोपदेशः संपूर्णो विस्तरात्संग्रहेण च ॥ १७१ ॥
मन्त्रब्राह्मणसङ्घेन यत्तत्त्वं प्राक्प्ररूपितम् ॥
तद्विद्यासाधनं सर्वं मुनिरेव विवक्षति ॥ १७२ ॥
तत्रादौ वेदनत्वस्यानुवादेन पुनः स्फुटम् ॥

---

॥ १६६ ॥ वाचो विग्लापनमित्यत्र कथं ध्यानस्य वाग्ग्लानि-
हेतुत्वमुच्यत इत्याशङ्क्यानुध्यानं शब्दोच्चारणस्याप्युपलक्षणमि-
त्याह *मन इति । विग्लापनं हीत्यत्र हिशब्दसूचितमर्थमाह *हि-
ंसैव इति । शब्दोच्चारणादि विदुषा न कार्यमित्यत्र स्मृतिमनुकू-
लयति *मौनादिरिति ॥१६७॥ तामेव स्मृतिं पठति *मौनमिति
॥१६८॥ न विदुषः कर्तव्यमस्तीत्यत्रापि मानान्तरं संवादयति
*ज्ञानेत्यादिना ॥१६९॥ ॥१७०॥ विग्लापनं हि तदित्यत्रेतिश-
ब्दार्थमाह *इतीति । परमप्रकृतमुपसंहरति *तत्त्वेति ॥१७१॥ उ-
त्तरकाण्डिकातात्पर्यमाह *मन्त्रेति ॥ १७२

श्रुति० सोऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय
आकाशस्तस्मिञ्छेते सर्वस्य वशी [illegible]

वा० सूचितं जीवब्रह्मैक्यं प्रतिपादितम् ॥
अत्रात्मवस्तुना योऽर्थः स्मर्यते सोऽभिधीयते ॥ १७९ ॥
ब्रह्मत्वादेव जीवस्य ब्रह्मजीवत्ववारणात् ॥
वशित्वाद्या ब्रह्मधर्मा लिप्यन्तेऽत्रोऽयमीश्वरः ॥ १८०
जीवत्ववशित्वाद्या यद्यपि भ्रान्तिकल्पिताः ॥
तथाऽप्येते समीचीनाः स्वप्ने मृत्रात्ययो यथा ॥ १८१ ॥
अत एव हि जिज्ञासुं प्ररोचयितुमीरितैः ॥
वशित्वाद्यैः प्रवर्तेऽसौ यज्ञादौ ज्ञानसाधने ॥ १८२ ॥
ननु कल्पितधर्माणां त्यागो वा ज्ञानबाध्यता ॥
आद्ये स्यादीश्वरधर्माणां नाशः स्याज्जीवधर्मवत् ॥ १८३ ॥
द्वितीये जीवधर्माणामप्यनाशोऽन्यधर्मवत् ॥

---

आत्मवस्तुना प्रोक्तं ब्रह्मात्मैकत्वं तेनैव वाक्येन स्मर्यते इत्यर्थः ॥ १७९ ॥ सर्वस्य वशीत्यादेरर्थमाह *ब्रह्मत्वादिति । जीवस्य वशित्वादिधर्मावबोधे फलितमाह *अत इति । वशित्वादिधर्मवत्त्वादेव मुक्तो जीव ईश्वर इत्यर्थः ॥ १८० ॥ वशित्वादेरपि कल्पितत्वेन तद्वत्त्वाया अपुमर्थत्वात्कथं तेन मुक्तः स्तूयते इति शंकित्वा परिहरति *जीवत्वादिति । *मृत्रात्यय इति ॥ स्वप्ने अपदे पादप्रक्षेपणपतनस्याप्यसत्त्वेऽपि कंपनं यथा भीतिहेतुरेवं वशित्वादयः कल्पिता अपि तथेत्यर्थः ॥ १८१ ॥ वशित्वादेः पुमर्थत्वे फलितमाह *अत एवेति ॥ १८२ ॥ ब्रह्मधीसाधनयज्ञादौ प्रवृत्त्यर्थं मुक्तो जीवो सर्वस्य वशीत्यादिना स्तूयते इत्युक्तमयुक्तं, विकल्पासहत्वादिति शंकते *नन्विति । आद्यं प्रत्याह *आद्य इति ॥ १८३ ॥

अथैतद्बुद्धिर्नोदेति [illegible] ॥ ४१७ ॥
महापापवतां नृणां ज्ञानवाञ्छा न रोचते ॥
मत्तुन ज्ञानपथस्तु मंदस्यो जायते जनः ॥ ४१८ ॥
भोगसारत्वविभ्रान्त्या ज्ञाने भोगो बचार्थिनि ॥
यंचोऽशुद्धचित्तत्व महापापवतो भवेत् ॥ ४१९ ॥
शुद्धचित्तस्य यज्ञाद्यैर्विवेकः शुचिसंभवः ॥
वैराग्यं ब्रह्मलोकादौ व्यवसायश्च सुनिर्मलम् ॥ ४२० ॥
ब्रह्मादिस्तम्बपर्यन्ते संसारेऽस्मिन्नसारताम् ॥
बुद्ध्वा भोगान्निवृत्तः सन्प्रत्यक्प्रवणतां व्रजेत् ॥४२१॥
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।
कुर्वन्दोषविहीनं तं निजात्मानं बुभुत्सते ॥ ४२२ ॥
महापापस्य नाशः स्यात्कर्मभिस्तपसश्च कृत्स्नशः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४२३ ॥
प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥ ४२४ ॥
सामर्थ्यमीदृक्चेदस्ति कर्मणां तर्हि किं तव ।

---

णमात्रेण ज्ञानोत्पत्तिसम्भवात्तमाह* पुरेति । स्वाध्यायकाले श्रुतमपि वाक्यमशुद्धबुद्धेर्जरद्गवादिवाक्यवदनर्थत्वेन प्रतिभाती- त्यर्थः ॥ ४१७ ॥ उक्तेऽर्थे स्मृतिमुदाहरति* महापापेति ॥ ४१८ ॥ ॥ ४१९ ॥ एवमशुद्धबुद्धेः श्रवणादौ प्रवृत्त्यभावमुपपाद्य यज्ञादिभिः शुद्धचित्तस्य जिज्ञासाक्रममाह* शुद्धेत्यादिना ॥ ४२० ॥ ४२१ ॥ ॥ ४२२ ॥ नन्वनुष्ठितयज्ञादेरपि पुंसो नास्मिन् जन्मनि शुद्धि- र्दृश्यते तत्राह *महापापस्येति ॥ ४२३ ॥ यज्ञादेर्विविदिषाहेतुत्व- मुपसंहरति* प्रत्यगिति ॥ ४२४ ॥ आक्षेपपूर्वकमेतमेवेत्यादि-

[illegible] मुनित्वार्थमपेक्षणात् ॥ ४२५ ॥

श्रुतिः—एतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ॥

वा॰—बुभुत्सन्तेऽयमात्मानं सर्वे यज्ञादिकर्मभिः ।
एतमेव विदित्वाऽसौ मुनिर्भवति नान्यथा ॥४२६॥
सदा मननशीलो यो जीवन्मुक्तो मुनिः स हि ॥
स्थितप्रज्ञादिभिः शब्दैर्मोक्षशास्त्रेषु वर्ण्यते ॥ ४२७ ॥
ज्ञानाभावे मुनिः कः स्यात्सत्स्वप्यन्येषु कर्मसु ॥
गृहिणोऽस्य विमुक्त्यर्थं स्मर्यते ज्ञाननिष्ठता ॥ ४२८ ॥
न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ॥
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥४२९॥
पारिव्राज्यस्य वैयर्थ्यमेवं तर्हीति मा शङ्क्यताम् ॥
आत्मानं लोकमिच्छन्तः प्रव्रजन्ति यतः स्वतः ॥ ४३० ॥
लोक्यते दृश्यते योऽर्थः स लोक इति वर्णनात् ॥

---

वाक्यप्रवृत्तावपि* सामर्थ्यमिति ॥ ४२५ ॥ श्रुत्यनुसाराणि व्याचष्टे* बुभुत्सन्त इति ॥ ४२६ ॥ मुनिशब्दार्थमाह* सदेति । स हि, स एवेत्यर्थः ॥ ४२७ ॥ मुनित्वमपि कर्मफलमेवास्तु कर्मणां विचित्रशक्तित्वादिति नेत्याह* ज्ञानेति । मुनित्वं ज्ञानैकसाध्यमित्यत्र हेतुमाह* गृहिण इति । कर्मिणामपि गृहिणां मुक्तये पृथग्ज्ञाननिष्ठाविधानान्मुनिशब्दितजीवन्मुक्तिर्न कर्मसाध्येत्यर्थः ॥ ४२८ ॥ गृहीणां ज्ञाननिष्ठाविधायकस्मृतिमुदाहरति* न्यायेति ॥ ४२९ ॥ गृहस्थस्यापि चेल्लभ्यते मुक्तिर्हन्त तर्हि किं स्त्रीपुत्रादित्यागलक्षणेन दुष्करेण संन्यासेनेत्याशंक्य तदुत्तरत्वेनोत्तरवाक्यमादत्ते* पारिव्राज्यस्येति ॥ ४३० ॥ लो-

अज्ञानहानिर्बाधाख्या जीवन्मुक्तिर्मुनिस्थितः ॥ ४३६ ॥

श्रुतिः-एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा ॥

वार्ति०-जीवन्मुक्तिरभीष्टा चेद्विद्वत्संन्यासमाचरेत् ॥
एतच्च स्मेतिवाक्येन तदेतदभिधीयते ॥ ४३७ ॥
अपत्यैः किं करिष्यामः सर्वदा दुःखहेतुभिः ॥
परमानन्द आत्माऽयमस्माभिर्वीक्ष्यतेऽनिशम् ॥४३८॥
इति मत्वा तत्त्वविदो व्युत्थायैषणात्रयात् ॥
भिक्षया देहनिर्वाहं कुर्वन्तः सुखमासते ॥ ४३९ ॥
परिव्राड्भिक्षुक आत्मा कीदृगित्यभिशङ्किते ॥
स एष नेति नेतीति श्रुतिराहोत्सुका सती ॥ ४४० ॥
ननु भिक्षादिना देहपोषणादौ समे सति ॥
आत्मतत्त्वविदः कोऽतिशयो मूढादितार्यताम् ॥४४१॥

---

विरोधादिति ध्येयम् ॥४३६॥ उत्तरवाक्यस्य पातनिकामाह जी-वादिति । तदेतदिति । तस्यार्थवाक्यम् एतज्जीवन्मुक्तिसाधनमित्येत-द्धस्मेत्यादिवाक्येनोच्यत इत्यर्थः ॥४३७॥ एतेन श्रुतिगततद्धवैत-द्व्याख्याने अवशिष्टपदानि व्याचष्टे अपत्यैरिति द्वाभ्याम् । पुत्रैषणादिशब्दानामर्थः कहोलब्राह्मणोक्तोऽनुसन्धेयः ॥ ४३८ ॥ ॥ ४३९ ॥ स एष इत्यादिवाक्यमाव

श्रुतिः—उभे ह्येवैष एव तरति । स एष नेति ने-त्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकर-वमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥२१॥

उभे उ हैवेत्युक्तिस्तच्चिन्ताया असम्भवे ॥
पुण्येन भूयान्पापेन कनीयान्वा भवेन्न यः ॥ ४४७ ॥
सोऽहमात्मनि विज्ञाते कर्मणोऽवसरः कुतः ॥
कृते देहादिभिस्ते द्वे अकृते वा क्रियाऽपि च ॥ ४४८ ॥
एवं तत्त्वविदं ते द्वे नैव तापयतः क्वचित् ॥
स्वयं न कुरुते तस्मात्तत्प्राप्तिश्च न विद्यते ॥ ४४९ ॥
नाप्राप्तयोस्तापकत्वं विद्यते परकीययोः ॥

---

इत्येते [illegible] एवं विद्वांसं न तरतः न स्पृशत एवेति ॥ २२ ॥

एतदेवोपपादयति* पुण्येनेति । पुण्यादिभिरुत्कर्षादि-रहितं ब्रह्मत्वेनात्मानमनुभवतो देहादिकं च परदेहवत्पृथक्त्वेन पश्यतः कर्मण एवाभावात्कुतस्तच्चिन्तेति भावः ॥४४७॥ नैनमित्यादि व्याचष्टे* कुत इति । एवं विद्वांसं कृते वाऽकृते वा ते द्वे पुण्यपापे मूढमिव न तापयत इत्यर्थः ॥ ४४८ ॥ क-र्मणोऽवसरः कुत इति विदुषः कर्माभावमुक्तं प्रपञ्चयति* स्व-यमिति । तस्मादिति शेषः ॥४४९॥ विदुषः कर्तृत्वाभिमानराहित्येन कर्माश्लेषं फलितमाह* नेति । अज्ञस्य तद्वैलक्षण्यमुक्तं स्यादथवा तयोरपि पुण्यपापयोस्तापहेतुत्वं श्रुतिसूचितं भ्रान्तिपूर्वं-

मूढस्य मूढयोः कर्तुस्तापः पूर्वमुदाहृतः ॥ ४५० ॥
अकर्तुरपि प्रत्याय इत्येतदभिधीयते स्फुटम् ॥
सर्वेण महता पापमकर्तारं प्रतापयेत् ॥ ४५१ ॥
पुण्यं च कातराहिंस्यादकर्तुस्तापदं भवेत् ॥
देहादिरक्षणाभ्येऽपि कर्मतापस्य वर्जनम् ॥ ४५२ ॥
मूढाभिज्ञयोर्विशेषस्य तापता पुनकल्पना ।
ब्राह्मणे विस्तृतो योऽर्थो मन्त्रे संक्षिप्यते स हि ॥४५३॥
एष इत्यादिको मन्त्रस्तदर्थस्तूपवर्ण्यते ।

श्रुति—तदेतदृचाऽभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् । तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति तस्मादेवंविच्छान्तो दान्त उपरतः ॥

वा०-अद्वैतपरमानन्दमहिमाऽऽत्मविदोऽस्ति यः ॥४५४॥

कमुपपादयति* मूढस्येत्यादिना ॥ ४५० ॥ ४५१ ॥ मिश्रादिना देहपोषणसाम्यात् मूढबुद्धयोर्विशेष इति चोद्यं परिहृत्य एषमित्यादिवाक्यतात्पर्यं निगमयति* देहेति ॥ ४५२ ॥ पुनरुक्तिं परिहरन्नेव इत्यादिवाक्यतात्पर्यं तदक्षराणि व्याख्यातुं प्रतिजानीते* ब्राह्मण इति ॥४५३॥ मन्त्रस्य पूर्वार्द्धं व्याचष्टे* अद्वैतेति । ब्राह्मणपदव्याख्या आत्मविद इति । न वर्द्धत इत्यादौ हेतुः कर्मजयोरिति । कर्मसाध्ययोरित्यर्थः । तस्यैव स्यात्पदवित्त्वित्यस्यार्थमाह* आत्मन इति । यस्मादात्मविद एष महिमाऽस्ति तस्मादात्मनो यत्पदं रूपं तद्विजानीयात्, तज्ज्ञानसाधनमनुतिष्ठेदित्यर्थः । मन्त्रशेषं व्याचष्टे* एतमिति । पापकर्मणः पुण्यस्याप्युप-

एष नित्यः कर्मजयोर्हानिवृद्ध्योरभाजनः ॥
आत्मनो यत्पदं तत्त्वं तदभिज्ञः पुमान्भवेत् ॥
एवं विदित्वा पापेन कर्मणा नैव लिप्यते ॥ ४५५ ॥
बहिरङ्गं पुरा प्रोक्तं वेदानुवचनादिकम् ॥
तत्संन्यासोऽन्तरंगत्वात्तत ऊर्ध्वमुदीरितः ॥ ४५६ ॥
अन्तरङ्गतरा ये ते शान्तिदान्त्यादयोऽखिलाः ॥
कर्तव्या इत्यभिप्रेत्य श्रुतिस्तत्र प्रवर्तते ॥ ४५७ ॥
शान्तिः क्रोधपरित्यागो दान्तिर्बाह्याक्षनिग्रहः ।
शान्तो मुनिर्बलीवर्दो दान्त इत्युक्तिदर्शनात् ॥४५८॥
शमादिगुणसिद्ध्यर्थं मोक्षशास्त्रेष्वनेकधा ।
विवेको वर्णितस्तत्र सदा शास्त्रं विचिन्तयेत् ॥४५९॥
अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते ।

---

लक्षणम् ॥४५४॥४५५॥ तस्मादित्यादिवाक्यं दृष्ट्वानुवादपूर्वकमव-
तारयति बहिरङ्गमित्यादिना । तदिति गतम् । तस्माद्वेदानुवच-
नादेरिति यावत् । तस्मादेवंविदिति श्रुतौ ज्ञानिनः कर्मलेपाभावः
पञ्चम्यर्थः । एवंविद् यथोक्तफलं विद्वानित्यर्थः ॥४५६॥४५७॥
शान्तो दान्त इत्यत्र शान्तिदान्तिपदयोरर्थमाह शान्तिरि-
ति । तत्र वृद्धप्रयोगं प्रमाणयति शान्त इति ॥ ४५८ ॥
उक्तशान्त्यादिसिद्धेरुपायमाह शमादीति ॥

न शब्दशास्त्राभिरतस्य मोक्षो न चापि लोकग्रहणे रतस्य ॥
न भोजनाच्छादनतत्परस्य न चापि रम्यावसथप्रियस्य ॥
आरण्यनित्यस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिविवर्जितस्य ।
अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरपेक्षकस्य ॥

इत्यादिशास्त्राद्विवेकं संपादयेदित्यर्थः ॥४५९॥ तत्र तावत्कोप-

विश्वासास्तिक्यतः श्रद्धा वाक्येषु गुरुशास्त्रयोः ॥४६६॥
श्रद्धाभक्तिज्ञानयोगादित्याथर्वणिकं वचः ।
श्रद्धावाँल्लभते ज्ञानमित्याह भगवानपि ॥ ४६७ ॥
रुचिमान्कर्मसंन्यासी युक्तः शमदमादिभिः ।
मुक्त्याधिकारी भूत्वाऽसावात्मन्यात्मानमीक्षते ॥४६८॥
देहेन्द्रियादिसाक्षित्वात्स्वानुभूत्येकमानतः ।
तस्मिन्नेव परात्मानं शास्त्रात्सत्यं प्रपश्यति ॥ ४६९ ॥
आधाराधेयभावोऽयमेकस्मिन्नौपचारिकः ।
राहोर्मूर्तेरिव संबन्ध उपचाराद्यथा तथा ॥ ४७० ॥
एवकारो भेदनुत्त्यै जीवात्मपरमात्मनोः ।
स्वात्मानमेव प्रत्येति ह्यखण्डत्वेन पश्यति ॥ ४७१ ॥
स्वात्मा यद्यपि दृष्टश्चेद् द्रष्टव्यं नावशिष्यते ।

खान्तरोक्तं श्रद्धावित्तपदं व्याचष्टे* श्रद्धेति । श्रद्धैव वित्तं धनं यस्य स तथोक्तः, श्रद्धालुर्भवेदिति यावत् ॥४६६॥ तस्याः ज्ञानहेतुत्वे मानमाह* श्रद्धेति ॥४६७॥ अक्षरार्थमुक्त्वा तत्रेत्यादिवाक्यार्थं संगृह्णाति* रुचिमानिति ॥४६८॥ आत्मन्येवात्मानमित्यस्यार्थमाह* देहेति । यस्तु प्रमात्राद्युत्पत्तिविनाशसाक्षित्वेन स्वमहिम्नैव स्फुरति तस्मिन्नुपनिषदेकवेद्यं परमात्मानं पश्यति । त्वंपदलक्ष्यं चैतन्यं निरतिशयात्मत्वेन पश्यतीत्यर्थः ॥ ४६९ ॥ कथं तर्हि तयोराधाराधेयभावेन भेदनिर्देश इत्याह* आधारेति ॥४७०॥ आत्मन्येवेत्यत्रैवकारार्थमाह* एवकार इति । भेदाभावेनात्मनीति सप्तम्या अविवक्षितत्वे वाक्ययोजनाप्रकारमाह* स्वात्मानमिति ॥ ४७१ ॥ परमात्मनः प्रत्यगभिन्नत्वे स्वात्मतत्त्वं प-

विद्यादीक्षजुरन्नादि ब्रह्मलोकं इतीरणात् ॥ ४८३ ॥
यो वेदैवं ब्रह्मलोकी भवेत् सत्पुमान् धियः ॥
ब्रह्मैव लोक इत्येवं पूर्वमेवोपपादितम् ॥ ४८४ ॥
समाधनाया विद्यायाः संपूर्णत्वादयं नृपः ॥
स्वदेहमपि राज्यं गुरवेऽस्मै न्यवेदयत् ॥ ४८५ ॥
आख्यायिकां परित्यज्य श्रुतिः स्वमुखतः पुनः ॥
स वा इत्यादिना वक्ति ब्रह्मावाप्ति फलार्थिनाम् ४८६॥
पूजार्थं भक्तदत्तान्नमत्तीत्यन्नाद उच्यते ॥
वसुदाता च भक्तेभ्यः स एष परमेश्वरः ॥ ४८७ ॥
पूजास्वीकारदातृत्वगुणयुक्तं महेश्वरम् ॥
य उपास्ते पुमानेष यथेष्टं लभते धनम् ॥ ४८८ ॥
श्रुतिः- स वा एष महानज आत्माऽजरोऽमरोऽमृतो ऽभयो ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥

इत्युपनिषदि, चतुर्थं ब्राह्मणं समाप्तम् ।

---

त्याह *ब्रह्मलोकमिति ॥ ४८३ ॥ तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे *य इति ॥ ४८४ ॥ सोऽहमित्यादेस्तात्पर्यमाह *समाधनाया इति ॥ ४८५ ॥ उत्तरकाण्डिकामवतारयति *आख्यायिकामिति ॥ ४८६ ॥ अन्नादवसुदानशब्दयोरर्थमाह *पूजार्थमिति ॥ ४८७ ॥ विन्दते वसु एवं वेदेत्यस्यार्थमाह *पूजेति । विन्दते इत्यस्य व्याख्या लभते धनमिति ॥ ४८८ ॥ स वा इत्यादिकाण्डिकान्तरं व्याचष्टे *विद्वदिति ? । स एष आत्मा ब्रह्मेति प्रथमं सम्बन्धः । फलदातुरीश्वरात् फलस्वीक-

वा०-विद्वद्दृष्ट्या स एषात्मा अजरामरत्ववर्जितः ॥
आनंदो भयहीनश्च ब्रह्मैवातो न चेतरः ॥ ४८९ ॥
द्वितीयाभावतो भीतिर्ब्रह्मत्वेनाविवर्जनात् ॥
अभयं, नित्यसिद्धिस्तु वैशब्देनात्र वर्ण्यते ॥ ४९० ॥
य एवं ब्रह्म जानाति तद्रूपेण भवत्यसौ ॥
इत्यन्तोऽशेषवेदान्तपरिनिष्ठिं सूचयेदिह ॥ ४९१ ॥
इति वार्त्तिकसारे चतुर्थाध्याये चतुर्थब्राह्मणं
समाप्तम् ।
मधुकाण्डं याज्ञवल्क्यकाण्डे विज्ञानमीरितम् ॥
तत्सर्वमुपसंहर्तुं मैत्रेयीब्राह्मणं भवेत् ॥ १ ॥
वक्तव्यश्च विशेषोऽत्र पूर्वोक्तादधिको नहि ॥
इति सूचयितुं ग्रन्थस्तत्पाठः पुनरुच्यते ॥ २ ॥
यद्यप्यतीतकाण्डेऽस्ति मधुब्राह्मणमुत्तमम् ॥

---

तुं भिन्नत्वात्कथमैक्यविषयाशंक्याह स्त्वय । पूर्वं नयोर्भेद उक्तो न वस्तुत इति मत्वाऽऽह *विद्वद्दृष्ट्येति । अजर इत्यादिपदान्याख्यानो ब्रह्मत्वे हेतुपरतया व्याकरोति *जरेति ॥ ४८९ ॥ अभयं वै ब्रह्मेत्येतद् व्याचष्टे *द्वितीयादिति ॥ ४९० ॥ अभयं हीत्यादिफलवाक्यं व्याचष्टे *य इति ॥ ४९१ ॥

इति वार्त्तिकसार टीकायां चतुर्थब्राह्मणं समाप्तम् ।

एवमव्ययब्राह्मणं सपरिकरं व्याख्याय मैत्रेयीब्राह्मणतात्पर्यमाह *मध्वेति ॥ १ ॥ अस्योपसंहारमात्रपरत्वं नातिरिक्तमतिपादकत्वमित्यत्र लिङ्गमाह *वक्तव्य इति ॥२॥ काण्डद्वयप्रतिपादितविज्ञानोपसंहारार्थं ब्राह्मणमित्युक्तमयुक्तं, मधुकाण्डस्य मधुब्राह्मणेनैवोपसंहृतत्वादिति शंकित्वा परिहरति *यद्यपीति ।
अयं भावः--मधुब्राह्मणस्यानेकार्थत्वं तावदुक्तं, तस्य हेत्व-

तथापि याज्ञवल्क्येन सम्बन्धायेदमुच्यते ॥ ३ ॥

इति वार्त्तिकसारे चतुर्थाध्यायस्य पञ्चमं ब्राह्मणं
समाप्तम् ॥

उपसंहृत्य तां विद्यां काण्डवंशोऽथ वर्ण्यते ॥
स व्याख्यातः पूर्वमेव ब्रह्माप्त्यै जप्यतामिति ॥ १ ॥
नवत्यधिकसंख्याताः श्लोका नवशतानि च ॥
संति वार्त्तिकसारेऽस्मिन् षष्ठाध्यायस्य संग्रहे ॥ २ ॥

इति वार्त्तिकसारे चतुर्थाध्यायस्य षष्ठब्राह्मणं
समाप्तम् ॥

श्रुतिः-अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी

सिद्धिनिराकरणपरत्वं इदं ब्राह्मणं काण्डद्वयार्थोपसंहारपरम् । तत्र मधुकाण्डार्थनिगमनपरत्वे इदं मुनिकाण्डार्थप्रार्थनिगमनपरमिति ॥ ३ ॥

इति वार्त्तिकसारटीकायां पञ्चमं ब्राह्मणं समाप्तम् ।

*विद्योपसंहारानन्तरं वंशवर्णनवैयर्थ्यमाशंक्य चतुर्थीकमर्थं* स्मारयति स व्याख्यातः पूर्वमेवेति ॥ १ ॥

इति वार्त्तिकसारटीकायां षष्ठब्राह्मणं समाप्तम् ॥

मैत्रेयीब्राह्मणे पूर्वं यान्यक्षराणि सविमर्शकानि तानि विवृण्वन्ते । सविज्ञानार्थमाख्यायिकानन्तरमेवकनकप्रदार्थः । यमिज्ञानार्थं सविधाना-नेन ब्राह्मणेन स पुनोपसंहृियत इति भावः । द्वयोर्मध्ये द्वयापवोतकः । ब्रह्मवादिनी ब्रह्मवदनशीला । स्त्रीप्रज्ञेति । स्त्रियां या उचिता प्रज्ञा गृहकार्यमात्रविषयकत्वरूपा सा स्त्रीप्रज्ञा, सैव न स्त्रीप्रज्ञा । नहि तस्मिन्काले चतुर्वेदस्यानुपपत्तिः । अथ

भवत्यात्मनस्तु कामाय पतिः प्रियो भवति, न वा अरे
जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय
जाया प्रिया भवति, न वा अरे पुत्राणां कामाय पुत्राः
प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवंति, न वा
अरे वित्तस्य कामाय वित्तं प्रियं भवति, आत्मनस्तु
कामाय वित्तं प्रियं भवति, नवा अरे पशूनां कामाय
पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया
भवन्ति, नवा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भव-
त्यात्मनस्तु कामाय ब्रह्म प्रियं भवति, न वा अरे
क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय
क्षत्रं प्रियं भवति, नवा अरे लोकानां कामाय लोकाः
प्रिया भवंति आत्मनस्तु कामाय लोकाः प्रिया
भवंति, नवा अरे देवानां कामाय देवाः प्रिया
भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवंति, न वा
अरे वेदानां कामाय वेदाः प्रिया भवंत्यात्मनस्तु का-
माय वेदाः प्रिया भवंति, नवा अरे भूतानां कामाय
भूतानि प्रियाणि भवंत्यात्मनस्तु कामाय भूतानि
प्रियाणि भवंति, नवा अरे सर्वस्य कामाय सर्वं प्रियं
भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति, आत्मा वा
अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो
मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं
सर्वं विदितम् ॥ ५ ॥

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद, क्षत्रं तं
परादाद्योऽन्यत्रात्मनः क्षत्रं वेद, लोकास्तं परादुर्यो
ऽन्यत्रात्मनो लोकान् वेद, देवास्तं परादुर्योऽन्यत्रात्म-

। देवान् वेद, वेदास्तं परादुर्योऽन्यत्रात्मनो वे-
दान्वेद, भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद,
सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्र-
मिमे लोका इमे देवा इमे वेदा इमानि भूतानीदꣳ
सर्वं यदयमात्मा ॥ ७ ॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नु-
याद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा
शब्दो गृहीतः ॥ ८ ॥

स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दा-
ञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा
शब्दो गृहीतः ॥ ९ ॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दा-
ञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य
वा शब्दो गृहीतः ॥ १० ॥

स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चर-
न्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्य-
दृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः
पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्या-
नानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयं च
लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि
सर्वाणि निःश्वसितानि ॥ ११ ॥

स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ
स्पर्शानां त्वगेकायनमेवꣳ सर्वेषां गन्धानां नासिके
एकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वैकायनमेवꣳ सर्वेषाꣳ
रूपाणां चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्र-

दितर इतरमभिवदति तदितर इतरꣳ शृणोति त-
दितर इतरं मनुते तदितर इतरꣳ स्पृशति त-
दितर इतरं विजानाति ॥ यत्र त्वस्य सर्वमात्मै-
वाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कꣳ रसये-
त्तत्केन कमभिवदेत्तत्केन कꣳ शृणुयात्तत्केन कं म-
न्वीत तत्केन कꣳ स्पृशेत्तत्केन कं विजानीयाद्येने-
दꣳ सर्वं विजानाति तं केन विजानीयात् स एष नेति
नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो
न हि सज्यतेऽसितो न व्यथते न रिष्यति विज्ञातार-
मरे केन विजानीयादित्युक्तानुशासनाऽसि मै-
त्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो
विजहार ॥ १५ ॥

इत्युपनिषदि षष्ठाध्यायस्य पञ्चमं ब्राह्मणं समाप्तम् ॥

अथ वꣳशाः पौतिमाष्यात् पौतिमाष्यो गौपव-
नाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौ-
पवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डि-
ल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥

---

चतुर्णामपि प्रपाठकानां निर्विशेष आत्मनि निष्ठता, नान्यो-
ऽन्तराले कश्चिदपि विवक्षितोऽर्थोऽस्तीति दर्शयितुमन्ते उपसंहारः
क्रियते—स एष नेति नेत्यादिना । यदुक्तमिति नेत्यात्मपरिज्ञानमेतदे-
वामृतत्वसाधनमित्येतमर्थमुपसंजिहीर्षन्नाह—एतावत् एतावन्मात्रं यदे-
तदुक्तमिति नेतीत्यद्वैतात्मदर्शनम् इदमेवारे मैत्रेयि अमृतत्वसाधनमिति
विज्ञेयं त्वयेति ह एवं किलामृतत्वसाधनमात्मज्ञानं प्रियायै उ-
क्त्वा यत्पूर्वं प्रतिज्ञातं प्रव्रजिष्यामीति तच्चकार । विजहार
प्रव्रजितवानित्यर्थः ॥ १५ ॥

